# समयसारभाष्यपीठिका
## (४९)

रचयिता-
अध्यात्मयोगी न्यायतीर्थ पूज्य श्री मनोहर जी वर्णी
'श्रीमत्सहजानन्द' महाराज

श्री सहजानन्द शास्त्रमाला
२०१, पुलिस स्ट्रीट, सदर मेरठ।

---



१०८० प्रथमावृत्ति
वीर नि० सं० २४८२ } १९५६ { पांच आने

# "समयसारभाष्यम्"

परमपूज्यश्रीमत्कुन्दकुन्दार्यप्रणीतसमयसारस्य
अध्यात्मयोगि-श्रीमत्सहजानंदविरचितम्

## समयसारभाष्यम्

स्वस्ति समयसाराय सहजानन्दसिद्धये ।
भाष्यं समयसारस्य भूयाच्चिदनुभूतये ॥

स्वस्तिशब्दस्य नम श्रेय.स्वच्छकल्याणाद्यनेकार्थत्वात् सहजानन्दसिद्धये चिद्रूपं सस्मर्य स्वस्तिशब्देनाईत्सिद्धाचार्योपाध्यायसाधुशास्त्ररत्नत्रयधर्मान् नत्वा चिद्रूपं सस्मर्य सहजानन्दसिद्धये श्रीमत्कुन्दकुन्दर्षिवरप्रणीतसमयसाराय श्रेयः कृत्वा सहजानदसिद्धये शुद्धोपयोगनिमित्त शुभोपयोगेरितयोगनियुक्त समसारस्य भाष्यमिदं स्वस्य चिदनुभूतये भूयात् ।

तथाहि—

श्रीमर्हत्परमदेव. समयसारः-स सम्यक् स्याद्वादव्यक्तिमूलत्वात् वस्तु अयता निरिचन्यतां मातिशयमिथ्यादृष्टिसम्यग्दृष्टिश्रावकविरतकरणत्रयवर्तिसूक्ष्मसाम्परायोपशान्तक्षीणकषायाना निर्मलचित्ताना पूज्यत्वेन आप्तत्वेन सारत्वात्, सरति गच्छति सर्वोत्कृष्टत्वमिति निरुक्तेः । 6

श्रीमत्सिद्धपरमात्मा समयसारः—समं निर्विकल्प स्वसंवेदनलक्षणसमाधिबलजातं साम्यं यातां प्राप्तुवं समयानां साधूनां ध्येयत्वेन तथैव स्वसाध्यत्वावच्छिन्नतया प्रपततां प्रतिच्छन्दस्थानीयत्वेन ज्ञानानन्दरत्नानां परां काष्ठां प्राप्तत्वेन निःशेषतया च कर्मनोकर्मरूपबाह्यमलापेतत्वेन सारत्वात् ।

श्रीमदाचार्यपरमेष्ठी समयसारः–स सम्यक् समिति गुप्तिगर्भं अयता निश्चयव्यवहारपथप्रस्थापितात्मचरणचरणाभ्यां स्वस्मिन्नेव गच्छता समयानां साधूनां दीक्षाशिक्षाप्रायश्चित्ताद्यात्मशोधननिमित्तप्रक्रियोपकारित्वेनाचारव्यवहाराधरिश्रावित्राधारप्रकारापापायदिग्रुत्पीडसुखावहत्वेन सारत्वात् ।

श्रीमदुपाध्यायपरमेष्ठी समयसार –स सम्यक् प्रकारेण परस्परमबाधमानतया याथातथ्यरूपेणायंति निश्चिन्वन्ति वस्तुतत्त्वं भव्या येन भावेन शब्देन वेति निरुक्तेः समयः सिद्धान्तः, स चासौ स्त्रियते प्राप्यते निमित्तभावेनावगम्यते येन विशुद्धात्मना स आचार्येणापि प्रमाणित सकलसाधुजनवृन्दसेव्यस्त्रिगौरवदूरस्थः समस्तसिद्धान्तसारवेदी स्याद्वादप्ररूपकः स्वशुद्धलक्ष्याच्युतः कृपालुरुपाध्यायः ।

श्रीमत्साधुपरमेष्ठी समयसार –समयेषु गमनेष्वाचरणेषु सारः रत्नत्रयम् स्वाधीनशाश्वतसत्यसुखमूलत्वात्तेन सह वर्ते- स समयसार

स्वस्वसत्तावस्थचिदचिद्रूपत्वेन निर्मलोपयोग. स्वात्मोन्मुखतया रागद्वेषप्रणिधानविरहित. साधुरिति यावत् ।

श्रीमत्केवलिप्रणीतपरमागमोऽपि समयसार.–स सम्यक् सम्बन्धाभिधेयशक्यानुष्ठानेष्टप्रयोजनमाश्रित्य स्वस्वामिमत तत्त्व अयते ज्ञायते यैर्यै. भावैर्वाक्यैर्वा ते समयाः स्वरूपभेदाभेदकार्यकारणविपर्यासरहितस्याद्वादात्मकाः सिद्धान्तास्तेषु सर्वतोमुखदृष्टित्वेनादृष्टेष्टाविरोधत्वेनानुल्लङ्घनत्वेन याथात्म्योपदेशकत्वेन सर्वहितस्वरूपत्वेन सर्वोत्कृष्टत्वात्सार: ।

श्रीमद्रत्नत्रयलक्षणधर्मोऽपि समयसार.–स सम्यक्त्व दुरभिनिवेशविमुक्तत्वेन समोचीनरूपत्वात् अय· ज्ञान ज्ञानपरिणत्यैव भावस्वरूपस्य रमना गमनात्, सरणं बाह्योऽशुभयोगोपयोगतो निवृत्य शुभे सरणं चलन अथवा समस्तबाह्ययोगोपयोगतो निवृत्य स्वात्मन्येव सरणं विहरणं चारित्रम् तेषां समुदायात्मको भावः समयसार. ।

मुमुक्षुवृन्दध्येयश्चिद्रूपोऽपि समयसार —सम्यक् प्रकारेण त्रिकाल स्वगुणपर्यायान् अयंति गच्छन्ति प्राप्नुवन्ति ते समया सकलपदार्था इति यावत् तेषु सारः आत्मा तत्रापि सारश्चिद्रूप. स्वयमुच्चैश्चकचकायमाननिर्मलनिजमह. समयसारः ।

सहजानन्दसिद्धि समयसारः–समयेषु कालक्षणेषु

सर्वोत्कृष्टपरिणतित्वात् सारः समयसार. ।

प्रकृतग्रन्थोऽपि समयसार.-प्रथमकरणचरणद्रव्यानुयोगरूपेषु समयेषु सिद्धान्तेषु मोक्षोपायमूलभूतभेदविज्ञान प्रतिपादकत्वेन सर्वशास्त्रफलोपायप्रदर्शकत्वेन सारः समय साराद्धि समयसारः । उक्तं च पूज्यपादैः-जीवोऽन्यः पुद्गलश्चान्य इत्यसौ तत्त्वसंग्रहः । यदन्यदुच्यते किञ्चित्सोऽस्तु तस्यैव विस्तरः । अथवा समः सदृश अयो बोधः समयः स एव सारः समयसारः द्रव्यदृष्ट्या लक्ष्यीभूत स्तस्य प्रतिपादकत्वादेव ग्र थोऽपि समयसारः ।

अथवा सगनेः सर्वज्ञानेष्वनुगत अयः प्रतिभास. समय स एव सारो द्रव्यदृष्ट्या लक्ष्यीभूतस्तस्य प्रति पादकत्वादेव ग्रन्थोऽपि समयसार ।

अथवा सम्यक् प्रमाणान्तराविसंवादित्वेन ईयते परिच्छिद्यत इति समय स एव सारो विसंवादितत्त्वरहित सत्यश्रद्धानिर्बन्धनत्वात्तस्य प्रतिपादकत्वात्प्रकृतग्रन्थोऽपि समयसारः ।

तदेव समयसाराय स्वस्ति कृत्वा नमस्कार विधाय, सु अस्तीति प्रमोद भावना विधाय शुद्धिमधिगन्तुकामः सूत्रमाश्रय—

वंदित्तु सव्वसिद्धे धुवमचलमणोवमं गइं पत्ते ।
वोच्छामि समयपाहुडमिणमो सुयकेवलीभणियं ॥१॥

एष किल सहजज्ञानानंदस्वभावोऽनादिसिद्धः पूर्वं कृतपरात्मदृष्टि-जनितास्थैर्यसंस्कारोऽप्यच्युतपरमपारिणामिकध्रुवस्वरूपचैतन्य चेतनोऽहमात्मा स्वद्रव्यक्षेत्रकालभावमहत्त्वनिश्चायितया पर्यायेनादिमतां विश्वेषामपि टङ्कोत्कीर्णप्रतिबिम्ब-वदशेषाकारकपरमभावाभावेन सह प्रकटितस्वभावपरिणत-त्वाच्च ध्रुवामनन्यमयीं गतिं प्राप्तान् स्वभावोन्मीलितशुद्धो-पयोगीकृतस्वरूपनिश्चलत्वेनाचलत्वादविच्छिन्नां गतिं प्राप्तान् शुद्धज्ञानानंदात्मकत्वेन सर्वद्रव्यपरिणामेभ्योऽस्वभावभूत-भावान्तरेभ्यो विलक्षणत्वादनुपमां गतिं प्राप्तान् सर्वसिद्धान् भावद्रव्यपरिणतिभ्यां नमस्कृत्य द्रव्यपरिणतिविधानेन परात्मसु तान्संस्थाप्य परमेश्वरं पारमैश्वर्यसाक्षात्कारिश्रुत केवलिभणित वक्ष्यमाणस्य सुभव्यत्वात्प्रत्यक्षीभूतमिदं समयप्राभृत भावनाचा सह द्रव्यवाचा हि वक्तुं संपत्तं ।

यो हि यदर्थी स तद्वन्तं स्मरतीति नैराश्यापरपर्याय-निजपद मिसिधिसुरार्थो मया कीदृग्भवितव्यमिति पर्यनु-योगे समुत्तरस्थानीयान्नैराश्याभूतभगवान् सर्वसिद्धान् स्वस्मिन्नाराध्याराधकभावरूपभावेन नमस्कारेण वचनात्मक द्रव्यनमस्कारेण च प्रथमत एव वन्दते ।

स्याद्वादप्रयोगविधिविद्वद्वविधिविपद्ममूल स्वात्म संसाधनरूप शुद्धोपयोगमय लोकोत्तरकार्यमहोत्सव निद् धातुकामो निर्व्युच्छेदनिजकार्यपरिसमाप्तये स्वनार्थीयन्

शुद्धतत्त्वप्रतिष्ठितान् महतो महनीयान् विशिष्टावान्तरस सोपयोगज्ञचैतन्यच्युत्यरुचित्वात् ग्रहत्कार्यसरमे कार्या-भपाधिक्यप्रतिष्ठाप्रवृत्तेश्च न तु द्विनिकान् अपि तु सर्वानेव सिद्धान् निमन्त्रयति स्वात्मनि च मनादरं निदधाति ।

सर्वसिद्धप्रयोगेन किल सिद्धमेतन्न खलु कश्चिदेकोऽ-सिद्धोऽनिष्पन्नोऽनादिशुद्धः सृष्टिकारणभूतोऽपरः परमेश्वरः समस्ति परमात्मपदे तिष्ठतां सर्वात्मना स्वस्वगुणपरिणतानां कदापि यमनियमसमाध्यादिबहिरङ्गविधिना तत्त्वतः स्वतत्त्वे चैतन्यलक्षणे चेतनेन सिद्धत्वाद्विरवेशामर्षाणां च स्वस्व-द्रव्यचेतनज्ञानमात्रपरिणतत्वस्य प्रसाधकविज्ञानससिद्धत्वाच्च ।

वंदित्तु वोच्छामीत्यपूर्णपूर्वक्रियाद्वयप्रदर्शनमात्मप-स्य स्वयमप्रभुत्वश्रद्धां श्रोतृप्रभुत्वश्रद्धाञ्चारयति कुत ? प्रभुत्वसिद्धयुपायवर्णनमाकल्प्यान्यपन्तुप्रवृत्ते । यतो हि स्वसिद्धत्वस्योद्दति विना सिद्धत्वसम्यसदेशोऽप्यशक्यः पर-स्मिन्न सिद्धत्वस्वीकृतिं विना । स्वपयोनकज्ञाताधकस्य तत्त्वज्ञाना च्छ्रातृश्रेयस्यप्रवृत्ते । वस्तुतश्चापि सिद्धानां स्वात्मनि स्थापनं विना निजसिद्धत्वस्यमाभ्यस्वीकृति विना सिद्धमाननम-स्कृतिन युज्यतेऽतः स्वात्मगतग्णारथानुभूत्याऽर्यो नमस्करोति। नमस्कारोऽयं सहजानन्दचैतन्यमहतोपयोगप्रभाव एव वर्तते । द्विविधा हि वन्दना भाववन्दना द्रव्यवन्दना चेति तत्र हि भाव-वन्दना शुद्धज्ञानानन्दघनस्वभावोऽहमिति सुदृढप्रतीत्या राग

दुष्प्रवृत्तीन् विस्मृत्य निरागं स्वलक्ष्ये स्थिरीभवनम् द्रव्य-वदना च निर्दोषसर्वज्ञपरमदेवाधिदेवसत्स्वरूपलक्षणनिधिना समयसारात्मस्थानाम्महनीयानां बहुमन्मानस्तुतिः ।

जीवो हि स्वजीवहितस्पृहः पूर्णः तत्स्पृहश्च भवति परन्तु कश्चिद्रागादिविभावान् हित मन्येत स खलु सर्वं पूर्णं रागं वाञ्छति, यश्च किल ज्ञानी स निर्दोषज्ञायकभावं हित-श्रद्दधाति अत. स यदि वाञ्छति चेत्पूर्णशुद्धदशामेवाङ्गी-करोति । एतदेव कारणं यदत्र पूर्णसिद्धशुद्धदशासमन्विताः सिद्धाः श्रीमत्कुन्दकुन्दार्येण स्वस्मिन् स्थापिता न तु पुण्य-पापादिविकारभावा अपूर्णशुद्धावस्थावच्छिन्ना वा दशा ।

यतो हि ते सिद्धाः सिद्धत्वेन साध्यानां स्वात्मना प्रति-च्छंदस्थानीयास्ततस्तेषां वंदना भक्तिः मन्मानस्तुतिः स्थापना भव्यात्मनां सुखचिकरा प्राकृतैव । प्रतिच्छंदो हि आदर्शः, उदाहरणं प्रतिध्वनिर्वा । सिद्धः प्रभुरित्थंभूतो हि विलक्षण स्वलक्षण आदर्शः समस्ति यत्साद्दृष्ट्वा कस्मिंश्चित्पर्याय लुठत्यपि न तं पश्यति परं परं शुद्धं त्रैकालिकावच्छिन्न-चैतन्यानुरूपं स्वं पश्यति । अपरं च यथा केनाऽपि निज-मास्यं न दृष्टं तथापि दर्पणस्थस्वमुखाकारप्रतिविम्बं दृष्ट्वा स्वमुखं प्रत्येत्येव तथा सिद्धस्वरूपपरलक्ष्यमुखेन ज्ञानी स्वं प्रत्येति एकत्वविभक्तस्वरूपम् । यत्तत्र वर्तते तन्मयि मे ।, यत्तत्र न वर्तते न तन्मयि न मे वेति ।

उदाहरणं च-कस्यचिन्मुमुक्षोस्तर्के समुत्थिते पक्षे यथा मम परा हितरूपा साध्या च, नन्वयंसिद्ध उदाहरण दृष्टान्तप्रदर्शनरूपः ममस्ति यदित्थभूताऽरूपा परा हितरूपा साध्या च ।

प्रतिघ्वनिर्यो-यथा-स्वहितमभिलिप्सु कश्चित्प्रन्या सन्ननिष्ठो भव्यात्मा सिद्धास्त्रीति-हु मयैव.व ज्ञानानद स्वरूपः पूर्णोऽसि तदा तनोऽपि प्रतिध्वनिरियान्यनिर्मरति यत्त्वमपि ज्ञानानंदस्वरूपः पूर्णोऽसि, निरीव निरीव ।

अथैव वदितु सव्वसिद्धे इति व्याख्याय सिद्धगते- ध्रुवत्वमचलत्वमनुपमत्वं तद्विपरीतत्वं च तिर्यङ्नरक मनुष्यदेवगतीनां सूच्यते । धर्मार्थकामरूपत्रिवर्गेभ्य उत्तीर्ण त्वादपवर्गेत्यितिनाम्नी स्वरूपनरक तिर्यगमनुष्यदेव- गतिभ्यश्चतुर्थ्य ध्रुवगवत्वात्पञ्चमगतिनाम्नी। जन्ममरणा तीतत्वान्निर्वाणदशाह्वा सकलद्रव्य भावकर्मनोकर्मभ्यो मुक्त- त्वा मुक्तस्वरूपा स्वात्मोपलब्धिलक्षणा सिद्धगतिहि ध्रुवाऽसिद्धत्वभावनिमित्तीभूतसमस्तकर्मकलङ्कानां निःशेष- तया क्षयात् । न हि तेषां क्वचिदपि कदाचित्पुनस्तेषां संगः संभाव्य कर्मबंधनिमित्तीभूतरागद्वेषमोहभावानामत्यन्ता भावात्। तिर्यगादिगतयस्तु पूर्वबद्धोदितकर्मोपाधिमान्निष्प भवा निमित्तभवा स्वभावविलक्षणत्वान्नानाविभावफलत्वा- दध्रुवा ।

तथा चेयमचला—आत्मनोऽपदत्वाच्चशानां द्रव्यान्तर-भावानां नैरन्तर्यपरिवृत्तीनामत्यन्तशान्तेः स्वस्वरूपनिश्चल-त्वात्। तिर्यगादयस्तु तद्विरुद्धत्वाच्चलाः। अनुपमा च सावद्यदतिरिक्तसकलोपमेयानामर्थानां तदशमादस्यमपि कर्तुमशक्तत्वात्। तिर्यगादयस्तत्र अनादिकर्मतन्त्रत्वेन सुलभत्वाद्दृष्टत्वाद्भुक्तत्वाच्चोपमावन्त्यः। तदेव ध्रुवाम-चलामनुपमां गतिं प्राप्तान् सर्वसिद्धान् वन्दित्वा कुन्दकुन्दा-चार्यदेव प्रभाषते यदहमहो इदं श्रुतकेवलिभणितं समय-प्राभृतं वक्ष्यामि अहो भव्याः! भव्यानामेव भाषणतात्पर्य-साफल्याधिकारित्वात्। अथवा यन्न कदाचिदपि रूच्या श्रुतं पूर्वं वा तद्भाषणप्रयत्नवेलायामवश्यमधिगन्तुकामानामा-श्चर्यकारकत्वात् ग्रन्थकर्तुः प्रहर्षत्वव्याहो शब्दो नुभाषते।

इदं वक्ष्यमाणसकलाध्यात्मसाराणां ज्ञानगतत्वात्प्रत्य-क्षीभूतं श्रुतकेवलिभणितं श्रुते आर्हत्परमागमे सकलसि-द्धि केवलिभिर्भणितंसर्वं द्वादशांगमगधाम्न च श्रुत ज्ञानद्धि श्रुतकेवलिभिर्वा भणितं वाऽनादि-पारम्पर्यप्रकाशितं समयप्राभृतं वक्ष्यामि।

समयप्राभृत—समः सदृश अय बोध. समय अथवा सगत सर्वज्ञानेऽप्यनुगत. अय प्रतिभासः समयः अथवा

प्रवहमानाम्, अचलां न चलतीत्यचला तां स्वभावविकासा-च्युतां, अनुपमा–उप समीपे मात्यनयेत्युपमा न विद्यते उपमा यस्याः सानुपमा तां सांसारिकसर्वपदेभ्योऽत्यन्तविलक्षणां सर्वोत्कृष्टाम् ।

गइ—गतिं यतो हि पूर्वदशाभ्यो विलक्षणावस्था तत गतिरेव किन्तु सा संसारविरहितैव ।

पत्ते –शक्तिरूपेण सिद्धस्य व्यक्तिकाले प्राप्तशब्द-स्य सार्थकत्वात् प्राप्तानिति साधु । शेषशब्दानां सार्थक्यं वाचनाया दृष्टव्यम् ।

सर्वतात्पर्यम् हि—अहं (कुन्दकुन्ददेवः) ध्रुवामचला मनुपमां गतिं प्राप्तान् सर्वसिद्धान् वंदित्वा इदं श्रुतकेव-लिभणितं श्रुतपरम्परागतं नतु केवलं स्वबुद्धिकल्पितं अत एव च प्रमाणीभूतं समयप्राभृतं शास्त्रं स्वस्य परेषां च संसार मतविच्छेदायान्तर्वचोभिर्वक्ष्यामि ।

अथ को हि नाम समय इति पृष्ट इवार्यो यतोहि पराश्रितं सुखाभासं भवक्लेशं बीभत्सु मन्यमाना कोऽहं कीदृग्गुणो मे च किं स्वाधीनं सुखं किं हितमित्याकांक्षिण एव शिष्योऽयास्ततो जिज्ञासून् परिभाषते ।

अथनोदात्तचित्तानां प्रवृत्ते. सार्वत्वान्मोहिनो निमास्व स्युजिज्ञासनश्च ज्ञानिन स्युर्ज्ञानिनो वा स्वनिश्चला. स्युरिति

सर्वानेव प्रत्याह—

जीवो चरित्तदंसणणाणट्ठिउ तं हि ससमय जाण।
पुग्गलकम्मपदेसट्ठियं च तं जाण परसमयं ॥२॥

अस्मीतिप्रत्ययविषयत्वादसत्यर्थक्रियाऽभावात्सत्त्वमापद्यमान सकलवस्तुकल्पनाविषयाणां तत्त्वप्रतिनियमायोगत्वेन स्वेष्टोपादानपरापोहनमपक्षत्वाच्छक्तीनां वमतेराधात्म्यानश्यभावित्वाद्वस्तुत्व प्रपञ्चोऽत्ययोत्पादध्रौव्यलक्षणाऽवाधानुस्यूतद्रव्यत्वानवच्छिन्न सकलगुणानां स्वस्वरूपव्यवस्थितत्वेनासङ्करतानुपपत्तेरगुरुलघुत्वयोगी सतो वस्तुनो द्रव्यस्य गुणपुञ्जस्य प्रदेशानाधारतयाऽनवस्थिते प्रदेशवत्त्वविशिष्ट प्रमेयत्वाभावे दृश्यमानसकलव्यवहारक्रियोच्छेदप्रसक्ते प्रमाणगोचरत्वाच्च प्रमेय पुद्गलधर्माधर्माकाशकालासाधारणचिद्रूपतास्वभावसद्भावात्सचिदानंदमयोऽयं जीवनाम पदार्थविशेष. स सर्वेष्वपेषु सगतत्वात्समय इत्यभिधीयते स किल शुद्धनिश्चयनयेन शुद्धकोऽरकीणकज्ञायकभावेन निश्चयप्राणेन तथा चाशुद्धनिश्चयनयेन क्षायोपशमिकज्ञानदर्शनरूपभावप्राणेन तथैव सद्भूतव्यवहारनयेन यथासंभवदिन्द्रियबलायुरुच्छ्वासप्राणैर्जीवति जीविष्यति जीवितो वा जीवः। तत्र द्रव्यस्वभावानुमारित्वप्रक्षोदयशुद्धचैतन्यसमुत्पादकभेदविज्ञानोदयात्समस्तद्रव्यान्तरभावात्प्रच्युत्य पुण्यपापशुभाशुभनिरूपशून्यशुद्धज्ञानदर्शनस्व-

भावनिजपरमात्मप्रतीतिसंवेदनानुभूतिलक्षणदर्शनज्ञानचारित्ररूपात्मतत्त्वस्थितत्वेन स्वोन्मुखः स्वसमयः । यश्चानाद्यविद्याप्रवर्तमानमोहवशवर्तितया कर्मनोकर्मादिबाह्यनिमित्ता एव रागद्वेषौ सुखासुखौ कुर्वन्तीति बुद्धया निजपरमात्मप्रतीतिसंवेदनानुभूतिरूपात्मतत्त्वात्प्रच्युत्य – कर्मप्रत्ययनोकर्माश्रयजदर्शनचारित्रविकारस्वरूपमोहरागद्वेषादिभावैकगतः परसमयः ।

समयस्यात्मनः स्वपरसमयदशाव्यतिरिक्तत्वेनाऽवस्थाद्वयावस्थयोरुपलभ्यमानः समयः अथवा समयस्य न केवलं शुद्धावस्थामात्रत्वं न चाशुद्धावस्थामात्रत्वं किन्त्वनाद्यनन्तोऽस्मिश्चस्वरूपो निजद्रव्यपर्यायव्यापकश्चेतनो द्रव्यविशेषस्तस्य स्वपरसमयाख्ययोर्द्वयोरवस्थयोरतिरिक्तत्वेनानुपलब्धेः स्वसमयपरसमयव्याख्यानेनैव श्रीमत्कुन्दकुन्दाचार्येण समयस्वरूपो गमीकृतः । अशुद्धदशा हि तावदनादिजन्यकर्मनोद्भूतरागद्वेषमया संसारावस्था, शुद्धदशा च परमिस्थनिजशुद्धस्वरूप प्रतीत्य स्वरूपानरचनता, तयोरुभयोश्च स्वभावदृष्ट्या शुद्धता वर्तते एवान्यथा शुद्धप्रतीत्यवलम्बनाश्रयभावात्सम्यक्त्वस्यैवानुपपत्तेः सकलकल्याणोपायस्वरूपो हि बन्धैव स्यात् संसारक्लेशमुक्तेरभावाच्चाशुद्धतास्वभावप्रसक्तेः स्वतंत्रस्वभावाभावात्तदेव सर्वसंसारश्च स्यात् ।

दसण— विशुद्धज्ञानदर्शनस्वभावनिजपरमात्मनि स्वभावदृष्ट्या रुचिरूपं दर्शनमोहानन्तानुबन्ध्युपशमक्षयक्षयोपशमजनितविकारपरिणमनं तत्त्वार्थश्रद्धानमय परमात्माप्तागमगुणनिरत्नश्रद्धानरूपं वा सम्यग्दर्शनम्। तन्मूलं हि भेदविज्ञानम्— अहं किल स्वद्रव्यक्षेत्रकालभावैरस्मि परद्रव्यक्षेत्रकालभावैर्नास्मि स्वयं स्वं करोमि नान्यः स्वात्मानं करोति न चाहमन्यं करोमि तथैव च न वेदय इति तथा चाहं स्वतन्त्रः सहजज्ञानदर्शनस्वभावः क्रोधादिभावास्वानित्याः कर्मविपाका इति भेदविज्ञानेन विना स्वात्मोपादानापोहनरुच्यभावात्। यस्मिन् सति श्रद्धाप्रतीत्यादिज्ञानपर्यायाः रुचिस्वाचरणादिचारित्रपर्यायाः भवन्ति तत्सम्यग्दर्शनं परमाह्लादगर्भमिति दिक्।

णाण—निर्विकारपरमात्मतत्त्वोपलब्धिलक्षणं, शुद्धात्मसंवित्तिमयं विशुद्धज्ञानदर्शनस्वभावनिजपरमात्मनि रागादिरहितस्वसंवेदनम् शुद्धात्मोपादेयसंवित्तिरूपं वा ज्ञानम्। जानातीति ज्ञानम् ज्ञायतेऽनेनेति ज्ञानम् ज्ञप्तिमात्रं वा ज्ञानमिति निरुक्तेरात्मज्ञानयोश्च भेदाभावविवक्षायामात्मा स्वं स्वेन स्वस्मै स्वस्मात् स्वस्मिन् जानाति। तद्धि यदा परविषयकेन ज्ञानेन तद्विषयं परत्वेन परिच्छिनत्ति स्वविषयकेन ज्ञानेन च स्वं सर्वविविक्तत्वेन सहजशुद्धस्वभावत्वेनानुभवति तदा मोक्षमार्गरूपं सम्यग्ज्ञानमुच्यते।

द्विउ—स्थितं समात्मदर्शनज्ञानचारित्रेषु स्थित। जीव किल दर्शनज्ञानचारित्रेष्वेव स्थितो भवति परस्य परगुणपर्यायेषु स्थातुमशक्यत्वात् तथापि विशुद्धचैतन्य-स्वभावनिजपरमात्मतत्त्वमिनन्नपुनिंयत्नरूपनेपु स्वक्षिहेतु स्व स्वकीयसकलात्पादनात्मदर्शनज्ञानचारित्रस्थितत्वेन वेभूय-मानः पश्चात् स्वयोग्यद्रव्यक्षेत्रकालमावत्रासौ यथार्थ परिज्ञानवलेन टङ्कोत्कीर्णैकज्ञायकस्वभावस्वमावप्रतीतिपरि-च्छित्तिचर्यानिष्ठ' समास्ते।

तोर्हि—मायामिथ्यानिदानशल्यस्वरूपविभावपरिणाम विपरीतविशुद्धज्ञानदर्शनस्वभावनिजपरमात्मसहजरूपोपयुक्त' सहजशुद्धज्ञानानदैकस्वमावोऽहं स्वाश्रिताः वर्णादयो रागादयश्च केचनापि मे न संतीति'श्रद्धाने तथैव ज्ञाने समाधिबलानुभूतचैतन्यस्वभावस्थिरत्वरूपचारित्रे स्थित परि णतम् नि–निश्चयेन।

जाय—हे स्वहितममिलिप्सो आत्मन्! स्वात्मनि स्वसहजरूपमवेदनेनानुजानीहि— भगवदार्योऽत्र बुद्धिगतं स्वपरसमयव्यक्तिशक्तिसम्पन्नमात्मानं कथयति नाचेतनम् तत्र जडत्वेन स्वयसामर्थ्यामावात्त प्रतीत्य व्यवहारस्य निमित्तत्वशक्त्ययोगात्। एतच्छ्रु एवन्त सर्वे स्वसहजज्ञान दर्शनस्वभावश्रद्धालवः शुद्धचैतन्यात्मस्थितिनियतत्वमेनोपा ददानाः स्वसमयतामनुभवेयुः।

समय—स्वसमय - स्वस्मिन् सम् एकत्वेन युगपत् अयते गच्छति परिणमते जानातीति निरुक्तेः स्व स्वेन स्वस्मै स्वस्मात् स्वस्मिन् जानतं परिणममानं जीवपदार्थम् । स्वसमय जानीहीति ।

ननु अयं जीव आसंसारत एवानादिबद्धकर्मगतत्पुद्गल निमित्तवशेनानात्मीयपदार्थाहंकाराद्धंकारात् पुद्गलकर्मोप देशस्थित सन् परसमयो वर्तते कश्चिच्च सोन् पुनरत्र कुत' परसमयतावर्णन विहाय प्रथमतः स्वसमयव्यारव्योक्तीकृतेति चेन्न स्वसमयताया सहजरूपविकासत्वात्स्वपरिणतिविशेषा नामानाम्नाथत्वात्प्रकृतशास्त्रमुख्यविषयानुरूपत्वादपूर्वत्वात्स्वपरमार्थलक्षणाभीन्द्योपयोगदेशनार्थत्वादस्यहितत्वाच्च प्राभेव स्वसमयनिरूपणं युक्तमेव ।

*पुग्गलकम्मपदेसट्ठियं च– मुख्य लक्षणभूतं सहजावस्था* गर्भ स्वसमयं व्याख्यायातीतक्यानुरूपावस्था च शब्देन गौणरूपतयैव व्यावयर्तते– पुग्गलकम्मपदेसट्ठियं– ज्ञानदर्शन सुखशक्त्यावरकेन्द्रियानुमरमरास्थितिदेहनिर्वर्तकलघुगुरुव्यपदेशकरूपरसस्पर्शगंधपरिणतेन्द्रियागोचरदृष्टानुभूतविविधफलनिमित्तभूतकर्मोदयजनितनारकादिरागाद्यपदेशदर्शितविभावस्थोपयुक्तम् । नहि पुद्गलकर्माणि जीवस्य सुखदुःखादिपरिणतिं कर्तुं तत्परिणत्या परिणमितु शक्नुवंति परेण परभावस्य कर्तुमशक्यत्वात्किन्तु निमित्तमात्र-

कर्मोदयकाले स्वविशुद्धचैतन्यस्वभावोपयोगच्युतो जीवः "पर द्रव्याणि, कर्माणि रागद्वेषौ कुर्वन्ति कायवाङ्मनसां कर्माहं करोमि परं धर्मफलं च वेदये परद्रव्याणि जानामि परया मीति" स्वविभावपरिणतिरूपविकल्पनयैव पुण्यपापादि-विकाररूपोऽहमित्यहंकारमूलपरात्मप्रतीविज्ञानचर्यास्थितः पर-मग्नः परसमयः प्रतीयते ।

तं जाण परसमयं— यथोक्तप्रकारतया विज्ञातं पुद्गल कर्मोदयजनितनारकादिव्यञ्जनपर्यायरागादिविभावार्थपर्याय-स्वरूपतया स्थितं तं जीवं परसमयं जानीहि ।

एवं समयसंज्ञितो जीवनामा पदार्थो विभावस्वभाव परिणतिगतत्वेन द्विविधः प्रतीयते ।

तत्र शुद्धात्मस्वभावः कः ? क च सत्यविश्राम इति केनचिज्जिज्ञासुना पृष्टे इवार्थः प्राह ।

एयत्तणिच्छयगओ समओ सव्वत्थ सु दरो लोए ।

बंधकहा एयत्ते तेण विसंवादिणी होई ॥३॥

सम् एकीभावरूपेणायते स्वगुणपर्यायान् गच्छतीति व्युत्पत्त्या समयसंज्ञिते जीवपुद्गलधर्माधर्माकाशकालद्रव्या-त्मनि लोके त्रिशतत्रिचत्वारिंशद्घनरज्जुमाने लोके वा सवत्र प्रतिव्यक्तिगः समय स्वकीयसाधारणासाधारणानत धर्ममयः स्वद्रव्यक्षेत्रकालभावास्तित्वमपन्न, परस्परमितरेतर द्रव्यक्षेत्रकालभावेभ्योऽत्यन्तव्यतिरिक्तत्वेन

स्वेषां स्वेषामेवाश्रिता सन्ति, मिलितानि मिलितयोः पयःपयसो क्षीरं क्षीरमेव सलिलं सलिलमेवेति स्वैरं स्वैरं वसन्ति। न हि लोकेऽस्मिन्नेकत्र जीवपुद्गलधर्माधर्माकाशकालद्रव्याणामवस्थितत्वेऽपि परस्परं कानिचित्किञ्चन चुम्बन्ति। परस्पर विरुद्धाविरुद्धकार्येषु निमित्तत्वेऽपि वास्तविकसम्बन्धस्य लेशमात्रस्याप्यभावात्। यतो ह्यनेकनिमित्तोपस्थितौ विरचिता कार्याकारनामानः पर्याया स्वस्वद्रव्यसामान्यपरिणतय एव सन्ति परिणतिशून्यद्रव्यस्यात्मनानास्तित्वप्रसक्तेरवश्यम् विषयाणामित्यात्। हे आत्मन्! त्वमिव धर्माधर्माकाशकालनामानोऽमूर्ताः पदार्थाः प्राप्तकृता सन्ति स्वयं च बद्धं मन्यमानः किञ्चिदपि नाटपटायसे। पुद्गलस्याणोरसंबद्धतां सरलतया समन्यमानस्य तव स्वस्यासबद्धता ज्ञाने न स्याद्भवतु! कुदृष्टिरियमत्र विसंवादिनी। एतामात्मविमुक्तावस्थादृष्टिं विहायापरिणमतएव निजात्मानं पश्य तत्र बन्धनं नाम किञ्चिदपि नास्ति। यत्र दृष्टौ संयोगो दृश्यते सैव विसंवादिनी सा शुद्धनिश्चयनये नामत्या। व्यवहारनयेन बन्धनस्य सत्यत्वेऽप्यालम्बनं भवभ्रमणबीजम्। यतो हि व्यवहारनयप्रवृत्तौ प्रवृत्तिरेव वर्द्धते। निश्चयनयप्रवृत्तावपि प्रवृत्तिनिवर्त्तने।

एकत्वनिश्चयगतो ज्ञानी परप्रवृत्तिकर्तृत्वं न मन्यते। न च द्रष्टासि परस्योऽकर्त्तासीत्यादिवाक्यं भूत-

प्रत्युत परोक्षाधिको प्रशमा श्रुतरा स्वरूपच्युतनिश्चयिनी निन्दा मन्यते ।

अथ पदव्याख्या क्रियते—

एयत्तणिच्छयगओ—एकस्य धर्मिण भाव एकत्व स्वकीय शुद्धगुणपर्यायाभिन्नत्व सम्यग्दर्शनज्ञानचारित्रैक्य-परिणतिरूपस्वभावैकत्वशुद्धात्मत्व तस्य निश्चय निर्गतश्चय. भिन्नसग्रहो यस्मात नि शेषाणां धर्माणां अभेदेन चयो वा स निश्चय अभेदपरिणतिरभेदोपयोगो वा तत्र गत प्राप्त एकत्व निश्चयगत स्वकीयशुद्धगुणपर्याय रिणत. ।

समओ—सम अभेद यात, सम् एकीभावेन गुणपर्यायान् अयन्, मयेन त्रिकालैकरूपगमनापरनामपरिणमनेन सहित—सम रागद्वेषादिकल्लोलरहित परिणाम यात—सम सदृशो बोधो यत्र वा, स संगत सर्वज्ञानेष्वनुगत अय प्रतिभासरूपो वा समय पश्चिद्प्यर्थ सामान्याविरुद्ध परिणतो वात्मेति ।

सव्वत्थलोए—सर्वत्र लोके ऊर्ध्वाधोमध्यविभक्तजगति, दृष्टादृष्टेषु सर्वद्रव्येषु, सर्वद्रव्येषु, सर्वावस्थासु, शुद्धनिश्चय-नयेन जीवानामेकेन्द्रियाद्यवस्थासु, पुद्गलानां द्वयणुकाद्य वस्थासु इति ।

सुन्दरो—सुन्दर समीचीन., विकल्परहित, सामान्य स्वभावत्वेन एकप्रभत्वात्विक्लः, अबद्ध, विसवादरहित

उपादेयः प्रज्ञया गृहीतव्य, योगिजनोपयोगैकगाज्यविषयः समस्ति।

एयत्तो—एवंविधमेकत्व स्वभावत सर्वत्र द्रव्येषु समस्ति तथापीति। तथाहि सर्वाणि द्रव्याणि परस्परतो द्रव्यतः क्षेत्रतः कालतो भावतोऽत्यन्तभिन्न नि स्वस्व द्रव्य क्षेत्रकालभावेषु तन्मयानि द्वैविध्यलेशमपि सोढुम शक्तानि स्वगुणपर्यायमात्राणि सन्ति स्वय च स्वैः स्वानि स्वेभ्य स्वेषु सृजन्ति।

बधकहा-सम्बन्धकथा—परस्य कर्मणः जीवेन सह सम्बन्धस्य मान्यता अथवा कर्मोदयनिमित्तवशादुद्भूत-क्रोधादिभावा अह मे वेति श्रद्धा कर्मजनितगुणस्थानादि पर्यायेषु स्वास्तिकता वा।

तेण विसवादिणी होदि—तेन पुद्गलानामुपयोगरहित-त्वेन, पुद्गलानामविवक्षितत्वात् जीवपदार्थेन सह विस-वादिनी विवादकारिणी आकुल्योत्पादिना भवति अथवा यत कारणात्, वस्तुत्ववशात् वस्तुन एकत्व समस्ति तथापि जीवद्रव्येण सह या बंधकथा कर्मबंधकथाऽथवा कर्मजनितपर्यायस्वरूपकथा प्रवर्तते सा असत्या वर्तते, निश्चयनयेन जीवस्वरूप नास्ति।

इदमत्र तात्पर्यम्—यत सर्वेऽर्था. निश्चयेन स्वरूप

भावे स्थिता राजन्ते ततो जीवेन सह निमित्तनैमित्तिक-
भावेन कर्मणः सम्बन्धस्य यथावस्था बन्धकथाविसंवाद-
करित्वाच्छोभते नैव ततो जीवस्यैकत्वावस्था, एकत्वो-
पयोगः स्वशुद्धगुणपर्यायाभेदोपयोगः कर्तव्य ।

अथैकत्वस्य स्वभावत्वात्तथ्य न तदुपलम्भ इति
प्रष्ट इवार्थस्तत्त्वस्य श्रुतत्वाभावात् परिचितत्वाभावादनु-
भूतत्वाभावात्सुलभत्वं नास्त्यनुभूतत्वं चात्यन्तसुलभत्वमिति
रहस्य प्रकटयन्नाह—

सुदपरिचिदाणुभूदा सव्वस्स वि कामभोगबंधकहा ।
एयत्तस्सुवलंभो णवरि ण सुलहो विहत्तस्स ॥४॥

इहोपात्तपुण्यपापशुभाशुभभारविकारात्मदृष्टि मोहा-
धिरोपितचतुर्गतिचक्रभ्रान्ते पट्टबद्धचक्षुषश्चक्रवाहिब-
लीवर्दस्येव रागद्वेषमोहितज्ञाननयनस्येन्द्रियाणीन्द्रियविषय-
चक्रवाहिनो भ्रान्त्या सरल ऋजु नव पथान व्रजामीति
मन्यमानस्य सर्वस्य प्राणिन कर्तृत्वभावरूपकामभोक्तृत्व-
भावरूपभोगसम्बन्धिनी कथा मुहुर्मुहुः श्रुता परिचिताऽनुभूता
स्थित्वनाद्यनन्तस्वसहायाखण्डत्वावच्छिन्नचैतन्यस्वरूपस्य
सनातनप्रकाशमानस्यापि पर्यायबुद्धितया तिरोभूतस्य गुण-
पर्यायानुगतस्यैकत्वस्योपलम्भो दुर्लभो भूत । अनादित इमे
प्राणिनो निगोदभवेष्वनन्तशो जन्ममरणानि कुर्वन्त. कथमपि

त्रसराशिं प्राप्य सञ्ज्ञिनश्च भूत्वापि मनुजभुक्तत्यक्तमलमक्षिका शूकरादय इव ज्ञानित्यक्तपुण्यवैभवमलानि सुहितं मन्यमाना भवेषु बम्भ्रमन्ति। "इमे पूर्वनिहितपुण्यविपाकत: समुपलब्धान् भोगान् भुञ्जन्ते" श्रुत्वा इदं परिणतिस्तदुत्साहश्च स्वपरं कृत्वा-ध्यात्मविपाकस्तैर्मलीमसा कर्तृत्वबुद्धिं भोक्तृत्वबुद्धिं च कुर्वन्ति। कामभोगभावा किल निमित्ताधीनदृष्टिं संयोगदृष्टिं विना नोत्पद्यन्ते, निमित्तरूपपरलक्ष्याभावे स्वयजातस्वसंवेदनमज्ञाने कामभोगनिरन्पा स्वयं नश्यन्ति। परकर्तृत्वभोक्तृत्वरहितं पराश्रयशून्यं पुण्यपापोभयपरिहरणम्बभावं विकल्पवृत्तिविलक्षणं सदान्तः प्रकाशमानं सहजस्वरूपदृष्ट्यनुभूतं टङ्कोत्कीर्णज्ञातस्वयं सिद्धं ज्ञायकमात्रमेवाहमिति भावनया तद्रूपं सन्नध्यात्मयोगी स्विलाध्यात्मपदं लभते। अखण्डचिदानन्दानुपवमाराश्रयः कारणपरमात्मा विशदभिन्नोऽनुभूयते तत्फलं कार्यमित्यर्थ।

इत्थं दृष्टिविरहिता "पुण्याद्धर्मो भवति तत एव चात्मसुखम्" इति कामनायाः कथा वृथा कुर्वन्ति। निमित्ताच्च धर्मो भवतीति बुद्ध्या निमित्तादरमात्रभावरूपभोगस्य कथां वृथा कुर्वन्ति। परं चेत्थं परपदार्थसम्बन्धभावरूपबन्धकथामनन्तशः श्रुतवन्तोऽप्यनन्तशः परिचितवन्तोऽप्यनन्तशोऽनुभूतवन्तः पराश्च श्रृणु परिचयानुभवेति दिशा नियुक्तनन्त. सक्लेशमात्रपरिश्रमशीला सन्तः पर्यायबुद्धिदुरभिनिवेशमोहिप्राणिसंगतिं कुर्वन्तः चतुरशीतिलक्षयोनिषु जायमाना बम्भ्रमन्ति।

धर्मिसन्निधाने तु स्वयं स्व पूर्णशक्तिमग्न। अद्यापि स्वस्मिन् स्थैर्यं प्राप्स्यन्ति यतो किञ्चित् ज्ञानिसम्पोपयोग ज्ञानिसंगति समस्ति। ज्ञानिदर्शनात् मनसा चेष्टा दृष्ट्वा तदैवो पयोजनमचेतनसंगतिर्न तद्भाव स्खलु धर्मभाव उत्पद्यते।

वस्तुतो हि न परवस्तूनि विषया न च रूपरसगन्धस्पर्श शब्दादयो विषया सन्ति। किन्तु परेन्द्रियरागभाव एव यथा म द शोभ्यवस्थितत्वेन निजतत्त्वमतित्वात् निमित्ताभाव स्वरूपनिर्माण समर्थत्वात् विषयभावतामास्कन्दति। परद्रव्यं लक्षयित्वा प्राणी रागद्वेषौ विदधाति तत एव परपदार्थो विषय प्रकल्प्यते परलक्ष्य विधोपिष्टानिष्टभावानामेव विषयत्वविनिश्चयात्। यतो हि ज्ञान भावेन परद्रव्यज्ञप्तिर्हि परद्रव्यस्य ज्ञेयत्वम्। रागद्वेषपूर्विका पर-द्रव्यनिष्पत्तिर्हि परद्रव्यस्य विषयत्वम्।

इत्थं निजवस्तु विस्मृत्य परवस्तुमोहभावेन सञ्जाततृष्णो मुग्धो बाह्ये सुखमन्वेषयति पर बाह्यानामर्थानामनन्त न तत तृष्णाया अप्यनन्तत्वान्न न समादधानो महतीमाकुलता लभते।

अत भो मुमुक्षो! यदि सत्सुखमिच्छावर्तते तर्हि प्रथममेव पर्यायबुद्धिसंगति विहाय निजशुद्धात्मसंवेदनसमरसाधिकारि संगति विधाय सर्वारम्भेण सर्वपरलक्ष्य निजलक्ष्य बलेन त्यक्त्वा विरम।

अथ पदव्याख्या क्रियते—सन्त्यसनि सर्वस्यापि एकेन्द्रिय

जीवाद्यारस्य मज्ञिपञ्चेन्द्रियपर्यन्तस्य ससारिणो जीवस्य । नन्वे कन्द्रियजीवस्य केवलस्पर्शनेन्द्रियाधिष्ठानत्वात्तवोऽन्येषाममनस्कपञ्चेन्द्रियपर्यन्ताना च मनसोऽभावात्कथ काममोगबधकथा प्रवर्ततावम् तेषामिति चेदुच्यते काममोगकथाया फल दुःखमेव दुःखस्य च तत्र विद्यमानत्वात् कारणता गर्मितैवेति । सर्वस्येति वचने जीवसमासापेक्षया सर्वेषा गुणस्थानापेक्षया मुख्यतया मिथ्यादृष्टीना मिथ्यात्वसासादनमिश्रगुणस्थानवर्तिना वा प्रमत्तान्ताना च ग्रहणम् ।

काममोगबधकथा कामश्चभोगश्च बधश्चेति काममोगबधस्तेषा कथा काममोगबधकथा । अथवा कामश्च भोगश्च काममोगौ तयोर्बंध सबधस्तस्य कथा । अत्र कामशब्देन च स्पर्शनरसनेन्द्रियविषयो गृह्यते, अथवा अहकरोमीतिकर्तृत्वभाव आहोस्विदिच्छाविषयो वेद्यमानो वा गृह्यते । मोगशब्देन च घ्राणचक्षुःश्रोत्रेन्द्रियविषयो भोक्तृत्वमान इद्रियानुभवनविषयो वेदकभावो वा गृह्यते । बधशब्देन च कर्मबधस्तत्फल च गृह्यते । तेषा तयोर्विषयिनी वा कथा काममोगबधकथा ।

सुदपरिचिदाणुभूदा वैशिष्ट्यक्रमठ' श्रुतपरिचितानुभूतशब्दानामत्र न्याय ।

[ आगे का एक पृष्ठ प्रेस मेटर खो गया है ]

उपलम्भो ण सुलहो–उपलब्धिः ज्ञातृत्वस्थितया भवनद्वारेण ज्ञानमयस्वशुद्धात्मद्रव्यस्य ज्ञप्ति न सुलभम् अनादितोऽविद्यासंस्कारवशात् पर्यायबुद्धित्वेन स्वस्याऽपरिज्ञानात् । तस्मादेव च मानकषायवशतस्त्वया मज्ञानिनामुपासनस्य परिणामाभावात् । अन्तर्बाह्यसाधनयोगस्याभावात् ।

इदमत्र तात्पर्यम्–इह सर्वस्यापि जन्तो कर्मपरवशानामहितानां शत्रूणां कामभोगानां सम्बन्धिनी कथा परकीयाऽपि परमूढत्वात्सरला मता किन्तु इदं सर्वपर्यायेष्वनुगतं स्वत्वमन्तःप्रकाशमानमपि कषायानुरञ्जितोपयोगत्वात् श्रुतमपि न परिचितमपि न, अनुभूतत्वस्य तु कथैव का । ततो हे आत्मन् पुण्यपापविपाकरूप सर्वजगतो मे न हितम् अहं हि रागादिरहितं शुद्धदर्शनज्ञानमात्मास्वत्वमात्र न किल केनचिदपि सम्बद्धः किन्तु स्वतन्त्रः पूर्णोऽस्मीति श्रद्धामृतशीतजलेन मिथ्यात्वरागादिवह्निमुत्पन्नसंसारदुःखदाहमुपशम । नात्र स्वैकत्वलक्षणनिजनैर्मल्यातिरिक्तं कश्चन ते शरणम्

भगवन् किन्तु तन्नैर्मल्यमेकत्वं च यन्मे शरणमिति श्रेयसे ते जिज्ञासमानान् प्रति परमकारुणिकः कुन्दकुन्दार्य आह

तं एयत्तविहत्तं दाएहं अप्पणो सविहवेण ।

जदि दाएज्ज पमाणं चुक्किज्ज छलं ण घेत्तव्वं ॥५॥

एष किल स्वसंवेदनप्रत्यक्षो ज्ञप्तिस्वभावरूपोऽहं सकलानेकान्तात्मकार्थसमर्थस्वरूपोद्भासिपरमागमाभ्यासजनितज्ञानमयेन

त्म्यनभूतशुद्धहिततत्त्वप्रकाशको ग्रन्थोऽस्य समन ।

अत्र ग्रन्थे विधिनिषेधद्वारेण शुद्धात्मत्वं प्रतिपादयिष्यते । तद्विधेरप्यनेकान्तमुद्रामुद्रितत्वात्प्रमाणीभूतत्वात्तद्वाच्यस्य च तत्त्व एव प्रमाणीभूतत्वात्तच्छुद्धात्मत्वं सर्वहितकारि इति । यत सर्वमनेकान्तात्मकं सत्त्वात् ।

वस्तु हि स्वद्रव्येण स्वक्षेत्रेण स्वकालेन स्वभावेनास्ति परद्रव्येण परक्षेत्रेण परकालेन परभावेन नास्ति । अत्रास्तित्वमपि चतुष्टयापेक्षयाऽनन्तगुणपर्यायापेक्षयाऽनन्तधर्मविशिष्टत्वं तथा नास्तित्वमपि वस्त्वनुजीविगुणातिरिक्तानन्तद्रव्यापेक्षया ततोऽप्यधिकमनन्तविशिष्टत्वम् । एवमेव नित्यानित्यैकानेकाद्यनन्तव्यक्ताव्यक्तधर्मविशिष्टत्वं वस्तुतः प्रसाधयति । किमन्यत् एकान्तदुरभिनिवेशग्राहिणा आत्मनोऽप्यनेकान्तात्मत्वम् सत्त्वात् वस्तुतो विविधगुणधर्माणां वमनशीलत्वात् ।

तमनेकान्तात्मकमनेकान्तात्मिकज्ञानरूपेण कान्तमूर्तिरनेकान्तात्मकान् पात्रान् प्रत्याह ।

अथ पदव्याख्या क्रियते-

त पूर्वप्रकरणमकेतितमवोधज्ञानमव्यक्तं सद्बोधचक्षुषा व्यक्तमनुभव समयेऽनुभूयमानत्वात्स्मरणविषयमनुभवानन्तरं स्मृतिविषयरूप मस्मर्यमाणमपीतरजन प्रत्यक्षं दर्शयितुमशक्तिविषयं तम् मिति भाव-

त्वभावनाबलप्रजृम्भितसहजशुद्धदर्शनज्ञानस्वभावात्मतत्त्वस्थैर्यरूपाभेदरत्नत्रयैकपरिणत कारणसमयसाररूप कार्यसमयसाररूपं वा परमात्मस्वरूपम् । एतेनात्मन ज्ञानादिगुणशून्यत्व-पञ्चभूतोपजायमानत्वप्रभृतिप्रकल्पना निरस्ता ।

विभक्त —अनन्तपरद्रव्यक्षेत्रपर्यायगुणविरहित परोपाधिक स्वकाश्रयजमिथ्यात्वरागादिरहित अकिञ्चनोऽहमिति बलवद्भावनानलध्वस्तपरलक्ष्यभावनातर्कप्रकारीयशून्यस्य मोहक्षोभरहित निर्विकारजीवतत्त्वमिति भाव । एतेन सर्वार्थस्यैकपरमात्मतत्त्वतिर्यक्सामान्यगत सर्वनिवर्तमयैकसत्तात्मत्वप्रभृति प्रकल्पना निरस्ता ।

दाएहं—दर्शयेयम्—कर्तृत्वबुद्धिनिरसनपर कर्तृत्वबुद्धिनिरसन परग्रन्थप्रस्तावनायां कर्तृत्वाभासमयमिद पद मोहान्धविपन्नप्राणिगणपरमकरुणाप्रेरितस्य सम्यग्ज्ञानवत उपादानबल घोषयति सर्वेन गदिततत्त्वस्य हृदयंगमत्वाभिलाषक प्राह आर्ग 'दर्शयेयम्' पश्यन्त प्रेरयेयम् इति भाव यतो न खलु भव्यग स्वज्ञप्तिपरिणतिं विनाऽपरिणममान दर्शयितु निमित्तमात्रोऽपि कश्चित् । अह कथयामि पश्य पश्य इति विधिना दर्शयेयम् ।

अप्पणो सविहवेण—आगमतर्कगुरूपदेशस्वानुभवरूपेण आत्मन स्वस्य विभवेन अतति गच्छति जानाति इति आत्मा तस्य स्वविभवेन । भवतीति भव विशेषेण भवतीति विभव तेन । अत्र तीर्थंकरप्रकाशिततत्त्वमेव कथयामि नान्तरमिति अन्तमानसानपि

निनैभवलस्वसवेदनप्रत्यक्षगततत्त्वेन नि शङ्क स्वयमुत्तरदायी प्रमलोपादानतत्त्व श्रीमत्कुन्दकुन्द प्राह–त ग्रात्मन स्वविभवेन दर्शयेयम् । लोकनियमोऽयं तावद्वक्तर्यप्रतीते तद्वचने लोकोऽपि न प्रवर्तते । नन्वेतत्प्रमाणतरणमेव, तत्त्व हि परापरगुरुप्रसादोपलब्ध वर्तते परमत्र ' स्वविभवेन ' निगद्यते, तन्न यत पूर्वमेव वदितु इत्यादि गाथाया 'सुदकेवलीभणिद' इति पदेन स्वकर्तृत्वनिरसनात् । अत्र तु साक्षाद्वक्तत्वप्रकरणे स्वस्य प्रमाणता विना श्रोतृणामप्रवृत्तेः परमरहस्यया स्वानुभूततत्त्वप्रकाशने शङ्का रहित स्वविभवबल प्रदर्शयन्नाचार्य प्राह । ग्रप्पणो सविहवेण दर्शयेयम् । साक्षाद्वचनालापकाले सर्वत्रगदितमस्तीति पुन पुन वचने वक्तुरुपदेशस्वानुभवविहीनताप्रतीतेः श्रोतुस्तत्त्वाचरण रूपादरस्य दुर्लभत्वात् ।

जदि दाएज्ज–यद्यह तद्दित शुद्धात्मतत्त्व दर्शयेय ग्रत्र ममा धिभावनाऽभीक्ष्णोपयोगस्याध्यात्मयोगिनो वक्तु रेतद्वचनचक्रस्थस्य परमरहस्यास्पिष्टमात्रकर्तृत्वप्रकाशनेन स्वतन्त्रता प्रसिद्ध्यति। प्रवक्तरि ह्यखण्डनिनचैतन्ययाथात्म्यश्रद्धोपादानबल समस्ति समक च प्ररूपणभागोऽपि ताभ्या सह च वाणियोगोऽपि विद्यते । नात्राचार्यमनसि शङ्का किन्तु शङ्काशीलाना श्रोतृणा शङ्काऽपनुदत्त्वया स्वबलप्रदर्शनेन 'यदि दर्शयेयम्' इति शैल्याऽर्थ प्रतिपादयति ।

पमाणं– प्रमाणीकर्तव्यम्–सशयविपर्ययानध्यवसायरहिता-नुभवपूर्वनिजज्ञानपरिणत्या प्रमाणीकर्तव्यम् । ...

स्वीकर्तव्यम् तथैव स्वीकरणे स्वोपादानलक्ष्यस्याभावे मोहरागद्वेष शून्यत्वात्स्वलक्षणाभीष्टपदानुपलब्धे । अत्र श्रोतॄणां स्वतन्त्रता प्रसिद्ध्यति न किंचिदुत्तरम् यतेद तत्र स्वीकुर्तैव । कुत स्वज्ञानपरिणतिं विना स्वीकारतायाः अशक्यत्वात् स्वज्ञप्तिपरिणतौ च स्वीकारता-निरोधरूपाशक्यत्वात् ।

जिज्ञासु- यदि स्खलेयम्-प्रदर्शितवच्च्युतो भवेयम् । अय मस्य भाव निश्चयनस्तत्त्वमवक्तव्य वर्तते वस्तुतो विनानुभूति कल्पना विना शब्दार्थयो वाच्यवाचकसम्बन्धाभावात् अविना भावसम्बन्धानुपलब्धेश्च । तत एव चार्थप्रकाशे शब्दस्य व्यभिचारि त्वम् । नात्राचार्यस्य शुद्धतत्त्वावबोधाभाव प्रकाशनसामर्थ्याभावो वा उद्दोश्यित्वकाचिच्छङ्का किन्तु अननुभूततत्त्वानां अश्रुतपरिचित तत्त्वानां च सकलग्रहणाभ्यासाभावेन तत्र साफल्यसंदेह । श्रोतु- रिदमपराधत्व स्वस्योपरि विनियोज्यार्थं प्रवदति "यदि स्खले- यम्" । लोकेऽपि दृश्यते केनचिद्विज्ञानिना सत्पुरुषेण बहुश प्रतिबोध्यमानोऽपि यदि न मन्येत तर्हि स विज्ञानी प्रणिगदति यदहं स्वकीयभावस्य प्रकाशनेऽशक्त इति ।

छल ण घेत्तव्व—स भावो न गृहीतव्या स स्व छादयेत् छलेन् । अथवा नयानां बहुत्वात् वस्तुतोऽनेकान्तात्मकत्वात् शब्दसमर्गी अपेचारादे च सहयोग एव कर्तव्या दोषदृष्टिर्न गृही तव्या यदत्र पूर्वमिदं भणितमत्र पुनरिदं भण्यते । अथवा शुद्धतत्त्वा सति आत्मा न कश्चिदित्यादिरीत्या नास्तिक्य न गृहीत-

व्याम् पुनरवगन्तुमुद्यमो विधेय यतो न्यायनयलक्षणाद्युपायै
स्वानुभवेन यन्निरन्तरं मया स्वसंवेदनप्रत्यक्षीकृत तच्छुद्धात्मत
वोपचरणमार्गेण त्वं सुखीभविष्यसि । अत्र श्रीमत्कुन्दकुन्दगुरो
श्रोतरि शिष्ये परमकारुण्यं प्रकटीभवति ।

इदमत्र तात्पर्यम्– अहं तत् पूर्वसङ्कलित स्वकीयशुद्धगुण
पर्यायपरिणत अभेदरत्नत्रयपरिणत निजतत्त्वमकलार्थाभिन्न
मोहरागद्वेषादिरहित आत्मन आगमतर्कगुरूपदेशस्वानुभवप्रसिद्ध-
ज्ञानबलेन त्वां दर्शयेयम् यदि शब्दद्वारैर्दर्शयेयम् तदा स्वयमेव
स्वानुभवेन सारं प्रमाणीकर्तव्यम् यदि तत्प्रदर्शनकार्ये स्खलेयम्
तदा छलं न गृहीतव्यम् ।

अथाचार्यदाक्ष्यं विनयेन स्वहितात्मश्रद्धानिर्मलहृदुत्सुकस्तया
जिज्ञासुभि सत्यशिष्यैः कोऽयं शुद्धात्मेति पृष्टे इत्यार्यः प्राह –

णवि होदि अप्पमत्तो ण पमत्तो जाणओ दुजो भावो ।
एवं भणंति सुद्ध णाओ जो सोउ सो चेव ॥६॥

य त्रिकालसमोत्पादव्ययध्रौव्यसमाहितत्वनिर्वृत्तिमान्-
नादिरन्तो सदान्त प्रकाशमान स्वसहायोऽखण्ड सरल
परिणामानुगत परिणामविशेषरहितो ज्ञायकभावस्वरूप स यद्यपि
संसारपर्यायापेक्षयाऽनादिप्रवाहबद्धकर्मनिमित्तमात्रत्व प्राप्य
स्वद्रव्यत्वेनमात्रपरिणत्या शुभाशुभभावैः परिणमते तथापि द्रव्यस्व-
भावापेक्षया परिणमनाभावात्प्रमत्तो न चाप्रमत्तो भवति। किन्तु-
शेषद्रव्यगुणपर्यायेभ्यो द्रव्यान्तरभावेभ्यो विभक्तत्वाऽऽराध्यमान

शुद्धएव दृश्यत इति शुद्धतत्त्ववेदिनो भणन्ति । न चास्य ज्ञायकस्य ज्ञानरूपेण परिणतत्वेन ज्ञानस्य च परविषयत्वात् परोपाधिमत्त्वमशुद्धत्व तदापि स्वकीयानुपमशक्तियोगित्वात् तस्य तेनैव तत्परिणमनात् । ततोऽयं ज्ञाता य शुद्धात्मा स ज्ञातैव नान्यस्पर्शीतिभाव ।

अत्र प्रमत्ताप्रमत्तगुणयो परिवर्तमान आचार्यो ज्ञानिनां दृष्टे रुच्चैस्तरत्वेन साधारणानिनाम प्रमत्तादिनिरूपाधिपर्यायभिन्न निजात्मबोधदौर्लभ्येन च निषेत्स्यमानयो प्रमत्ताप्रमत्तयो प्रागप्रमत्तशब्द निक्षिप्य निषेधयति–एष खल्वात्मा नाप्रमत्त नच प्रमत्त इति प्रमत्ताप्रमत्तान्ययो पर्यायरूपत्वात् ।

अनादिमिथ्यादृष्टिर्जीव प्रथमत क्षयोपशमलब्धि प्राप्तस्तद्वशाद्विशुद्धो गुरूपदेशधारणसमर्थ विशुद्धतरपरिणाम वशेन विहितान्त कोटाकोटिकर्मस्थितिको भव्यत्वशक्तिविपाकवशाद् यो ऽपूर्वानिवृत्तिकरणमप्राप्तो ऽन्तरकरणोपशमनविधानेन लब्ध प्रथमोपशम सम्यक्त्व पूर्वमनादिसंस्कारवशाच्छिथिलसम्यक्त्वो वा भवति तन्मुहूर्तकालाभ्यन्तर एव सासगनो ऽध करणापूर्वकरणद्वयं सप्राप्य वेदकसम्यग्दृष्टिर्भवति पुन अप्रत्याख्यानप्रत्याख्यानावरणयो क्षयोपशमात्करणद्वयेन प्राप्तसप्तम आन्ते स चैव श्रीमत्कुन्दकुन्दाचार्य शुद्धात्मतत्त्वोपयोगे स्थैर्यास्थैर्यवशात् प्रमत्ताप्रमत्तगुणस्थानयो परिणतोऽन्वभवत् । दतोऽसौ कृतिकर्मविकल्पेषु परकरुणाविकल्पेषु यदा स्थितस्तदा प्रमत्तगुणस्थानवर्ती यदा च निजशुद्धात्मतत्त्वा ऽन्त स्थिता-

युपयुक्तस्तदाऽप्रमत्तगुणस्थानवर्ती भवात् एव द्वयोर्गुणयो प्रवर्तमानस्य श्रीमत्कुन्दकुन्दाचार्यस्य परमकारुण्यवशेन शुद्धात्मतत्त्व-प्रतिपादनोत्साहानुरूप वाग्योगो बभूव सा चासौ वाणी हित रूपा मत्या च।

नायमात्मा वर्तमानदशामात्रो शुद्धावस्थाया अशुद्धावस्थाया वा पर्यायरूपत्वेन क्षणिकत्वात्, केवलज्ञानेऽपि प्रतिसमय शुद्धज्ञानव्यञ्जनाभिरनन्तकाल परिणतत्वेऽपि प्रतिज्ञानव्यञ्जनाया एकसमयस्थितिकत्वात्।

सर्वावस्था गौणीकृत्य यस्त्रिकालसामान्यस्वभावस्वरूपोऽहं स ज्ञायकभाव स एवाहम्।

अनन्तानन्ता अणवो धर्मास्तिकायोऽधर्मास्तिकाय आकाशो-ऽसंख्येया कालाणवश्च तथा गुणा स पर्याया अचेतनाश्चेतनाश्च मदतिरिक्तसकलजीवा अत्यन्ताभावविशिष्टा सर्वथा भिन्ना सर्वेषा स्वस्वीयेषु स्वकीयस्वरूप परिणमनात्। तेभ्य सर्वेभ्यो विविक्त परोपाधिजनित रागादिविकारेभ्यो विविक्तो भाव्यमानकेवलज्ञानादि शुद्धपर्यायेभ्योऽपि क्षणिकपर्यायत्वेन विविक्तो ज्ञानदर्शनादि गुणविकल्पभेदरहितोऽखण्डो ज्ञायकस्वरूपोऽहम्।

क्षणिकावस्थानुपयुक्तो लक्ष्यीकृतैकाविज्ञायकध्रुवस्वभाव स्तत्स्थितो ज्ञातृस्वरूपोऽहम्।

वर्तमानपर्यायनिषेधो नास्ति, स स्वस्वसमये स
[illegible] ज्ञाते पर्यायलक्ष्यो

यतो हि विना निज-नागरमहत्त्वानबोध पुण्यपापनिकृतभावेषु रुचिर्जायते ।

तदुत्तमतत्त्वे ज्ञातेऽहित निनश्वर कर्मबीज कोहि मतिमाादयात् ।

सोऽह ज्ञायकभावो यथा वर्तमानकालेऽस्मि तथैव त्रिकाल विषयोऽस्मि । ज्ञानवर्तमानपर्याये लक्ष्यीभूते नायकभावे ज्ञाते मति स एव त्रिकालस्थो ज्ञायकभावो ज्ञातो भवति । सोऽयमात्मा हमेतत्सामान्यस्वभावेन पूर्णा निर्मल पवित्रश्चेति दृष्टी सत्या पर्यायनिर्मलतापि भवत्येवेति ।

ननु ज्ञायकभावो हि ज्ञानस्वरूप ज्ञान च ज्ञेयाकारनिष्ठतातिरिक्तेतरव्यक्तिविरहित तत्कथ पराश्रयत्व स किल शुद्ध इति चेन्न यथा प्रकाशनसमयेऽपि दीपक प्रकाशादभिन्नो घटादिभ्यो-भिन्नस्तथा नाममपि ज्ञानेनाभिन्न ज्ञेयतश्चात्यन्त पृथक् । ज्ञान हि स्व स्वभावेन ज्ञेयाकारतया परिणमति न तु ज्ञेयाधीनतया । ज्ञेया हि केवल तद्विषया भवन्ति । ज्ञानशक्ति प्रतिसमये स्वय परिणमत ज्ञेयाकारनिष्ठस्वरूपवत्वेऽपि न हि ज्ञायकभावस्याशुद्धत्व इतरथा दाह्यनिष्ठदाहकभावस्येव ज्ञेयाकारनिष्ठनायकस्य सामान्यैक-स्वरूपत्वात् । स च नायकभाव सामान्यविशेषात्मकत्वाद्वस्तुत स्वय स्वस्मै स्व परिणामपरत्वादित्यवत् । सोऽह ज्ञायकभाव स तु ज्ञायक एव—

अथ पदव्याख्या क्रियते ।

णवि—नापि अप्रमत्त अपि य न भवति पुन प्रमत्तस्य

दनसम्यक्त्वसम्यग्मिथ्यात्वाविरतसम्यक्त्वदेशसंयतप्रमत्तगुणस्था-
नवर्तिनो जीवपर्याया गृह्यन्ते, अप्रमत्तशब्देन च तत्र उपरि
अप्रमत्ताद्यपूर्वकरणानिवृत्तिकरणसूक्ष्मसाम्परायोपशान्तमोहक्षीणमोह
सयोग्ययोगिजिनगुणस्थानवर्तिनो भावा गृह्यन्ते ऽथवा सिद्धपर्यन्ता
अपि ते सर्वे गृह्यन्ते। अयमात्मा प्रमत्तो नास्ति प्रमत्तभावस्य
पर्यायरूपत्वात् वसमादविरुद्धत्वात्परपक्षत्वाद्वा तादित्वाच्च । आत्मा
त्वनादिरनन्त स्वसहायोऽप्यएडचैतन्यस्वभाव ।

जाणओदुजोभावो—ज्ञायकस्वरूपो योऽसौ भाव पदार्थ
शुद्धात्मा अत्रायमात्माऽनन्तगुणवत्त्वेऽपि ज्ञानप्रधानदृष्ट्या त आत्मा
न्यस्वभावेन ज्ञायकभावपदेन स्मृत आत्मनो ज्ञायकस्वरूपत्वात्
अन्येषां सर्वेषां शक्तीनां तन्मयत्वेन पोषणात् पुद्गलस्य मूर्तित्ववत्।

परंच यद्यपि सर्वपदार्थानां द्रव्यत्वेनत्वाभावमत्वादात्मापि
द्रव्यत्वेनज्ञानमात्रमयस्तथापि द्रव्यत्वेनज्ञानद्रव्यं निरन्तरस्वाप-
रित्वाऽज्ञानमात्रमात्रस्यानुभवनेन निरिन्तरतया ज्ञेयेतानुभवनात्
तेनैवानुभवनानिरिन्तरत्वप्रसिद्धेर्ज्ञायकभावत्वेनैव शुद्धो गदित ।

एवं भणंति शुद्ध (शुद्धा वा) पूर्वोक्तरीत्या प्रमत्ताप्रमत्तास्था-
नीयमर्वपर्यायरहित सर्वकालिकं शुद्धात्मानं शुद्धतत्त्ववेदिन शुद्ध-
नयावलम्बिन शुद्ध भणति भण धातो शब्दार्थत्वात् शब्दार्थं
प्रकटयन्तीतिभाव । च पुनश्च कि भणंति इति प्रश्ने समादधाति
णाओ जो सोउ सो चेव अनेककल्पनाभिस्तत्परीक्षणप्रयत्ने
ऽपि कल्पनातीतत्वात् दृष्टश्रुतानुभूतभोगाकांक्षारूपमायामिथ्यानिदान-

गन्धरसादिनिमित्तरहितपरिणत्याऽनुभूयमानत्वविषयत्वात् एव भणति शुद्धनयतत्त्ववेदिन –'ज्ञात शुद्धात्मा य स ज्ञाता एव उपमातिक्रान्तादिद्वैतसम्बन्धमहत्त्वात् । स केवलमेको ज्ञातेर नानस्य विषये कर्तृकर्मणोरनन्यत्वात् ।

इत्यत्र तात्पर्यम्–शुद्धात्मनि दृष्टे शुद्धात्मपरिणतिमननात् शुद्धात्मा द्रष्टव्यो ज्ञातव्य प्रतिभातव्य एवास्ति यत्प्रतिभासनात् त्रिविधसंतापसमुत्पन्नस्यानस्य नाशिता प्रवर्तते । स शुद्धात्मा प्रमत्ताऽप्रमत्तादिसर्वपर्यायस्वरूपशून्य समस्तपरद्रव्यविविक्तो ज्ञायकभाव एव तमेव पश्य निश्चय ध्यायस्व सर्वसंकल्पविमुक्तश्च सन्ननुभव ।

नन्वात्मा दर्शनज्ञानचारित्रवांस्तु वर्तते एव तद्गुणाना गुणस्थानपरिणत्या प्राक् पश्चात् पूर्णत्वाभावे च आत्मास्तु न एवासिद्धत्वात्तस्य केवल ज्ञायक एव शुद्धस्तस्य दर्शनज्ञानचारित्रवत्त्वेनाशुद्धत्वमिति चेन्न यत –

ववहारेणुवदिस्सइ जीवस्स चरित्त दसण णाण ।
णवि णाण ण चरित्त ण दसण जाणगो सुद्धो ॥७॥

अनन्तधर्मात्मकाभेदपरिणतज्ञायकभावमयजीवस्य तीर्थप्रवृत्ति-निमित्तात् तद्गुणगुणिभेदरूपव्यवहारनयेन तत्त्वानवबुद्धस्य कैश्चिद्धर्मैरवबोधनाय चरतीति चारित्र पश्यतीति दर्शन जानातीति ज्ञान-मिति प्राधान्या दर्शनज्ञानचारित्रवत्त्वोपदिश्यते । परमार्थतस्त्वनन्ता-गुणपर्यायाभेदव्यवस्थितद्रव्यस्यैकज्ञायकभावमयत्वेनानुभूयमानताया

न दर्शन न ज्ञान न चारित्र केवल ज्ञायक एक एव शुद्धः ।

अत्र हि केचिद्वस्तुस्वातन्त्र्यस्वभावनयप्रकाराः स्ववेदिभिर्बहुभिः प्रकारैर्जीवस्याशुद्धत्व प्रथयन्ति तथाहि–जीवस्य कर्मादिपरद्रव्यसयोगेनाशुद्धत्व कर्मनिमित्तोद्भूतपर्यायनिमित्तत्वादशुद्धत्व पापादिविकारभावेनाशुद्धत्व व्रत करोमि सयम पालयामीत्यादि शुभविकारत्वेनाशुद्धत्व। तत्र तत्त्ववेदिना वदन्ति एतैरशुद्धत्व दूरमास्ताम् तेषामत्र सम्यग्दर्शनानुभवप्रकरणे विचारमात्रस्याप्यसहत्वात् तत्र त्वेकात्मनो दर्शन ज्ञान चारित्रमिति त्रिरूपभेदमात्रस्याप्यशुद्धत्व नास्ति । परमार्थतः निजशुद्धात्मद्रव्यानुभवे तद् विकल्पानाम विद्यमानत्वात् । अखण्डस्वभाव निजज्ञायकभावे ज्ञाते सत्यपि ग्राह्यद्रव्या पुण्यादिभावा भवन्त्यथवा ज्ञानदर्शनादिभेदविकल्पा उत्पद्यन्ते तथापि "विकारा विकल्पाश्च न मे स्वभावा मे ज्ञायकभावस्वभावो ये तेषा विकार वा विकल्पाना च नाशक एव न तु रक्षक पर्यायस्वभावेन भवन्ति चेद्भवन्तु अह त्वेकैव ज्ञायकस्वभावोऽहं" इति दृढप्रतीत्या सद दृष्टि सह्रदय एवास्ते ।

दर्शन ज्ञान चारित्रमित्यादिभेदाभेदविकल्पा क्रमापेक्षयैव भवन्ति क्रमस्तु मनस अपेक्षा विनाऽशक्य एवेति भेदवादिमनसोऽवलम्बिनो ज्ञानस्य सम्यग्दर्शनविषयभूताखण्डनिर्मलज्ञायकभावरूप निर्विकल्पानुभवाविषयत्वात्ते विकल्पा दृष्ट्या न व्यवतिष्ठन्ते ।

यद्यप्यात्मनि प्रत्यक्प्रत्यक्षस्वरूपवन्तोऽनन्ता गुणा सन्ति तेषु प्रत्यग्गुणेषु दृष्टि कुर्वाणाना गुणमयाभेदैकत्वगत

आत्मानानुभवगोचरो भवति पुनरुच्यताम् योऽनुभवे लक्ष्य एव नास्ति तस्मिन्स्थिरता कथ स्यात् ? तत्स्थैर्यं विना मोक्षमार्गो मोक्षश्चैव च कथ वा स्यात् ?

अनन्तधर्मिण्येकस्मिन् निजनायकभावमये भेदद्वारा विज्ञाते सति शुद्धदृष्ट्यनुभवो न जायते अभेदैकाग्रयता चाशक्या । यतो ह्यविकल्पस्याखण्डस्य निजशुद्धात्मनोऽवबोधं विना विकल्पेष्वस्थिरचित्तनिरोधाऽशक्य , ततश्चान्तर्तप सयमादयोऽशक्या । बाह्यक्रियामात्रस्य मोक्षमार्गत्वस्य निषेधान्न तेन किमप्यभीष्ट साध्यम् ।

अखण्डोऽप्ययमात्मा स्वरूपेणास्तिपररूपेण नास्ति द्रव्येणैको गुणपर्यायैरनेक इत्याद्यनेकधर्ममय । अथ किन्तु यदाऽनन्तगुणाभेद रूपैकपिण्डत्वेन निर्विकल्पतयाऽनुभूयते तदा पूर्णोऽनुभूयते यदा भेदविकल्पपुर सर विज्ञायते तदा स अंशरूपेणातो निश्चय-नयविषयमखण्डमात्मानमुपलभस्वेति परमोपदेश ।

सम्यग्दर्शनस्य विषयोऽखण्डनिर्मलत्रैकालानुगतकालिकला-विरहितसामान्यैकरूपचैतन्यभावस्तस्य लक्ष्ये निर्मलपर्याय आविर्भूय तत्रैव सामान्ये सम्मिलति तत्सदृशो भवतीति भाव ।

नानया गाथयाऽर्थस्य गुणाना विप्रतिषेध किन्त्वत्र परमार्थ स्वरूपात्मन्यभेदानुभवस्य स्थिति प्रदर्शिता । वस्तुतश्च द्रव्यम-खण्डमेव स्वभाव सामर्थ्यं चैकम् सामयिकी परिणतिश्चाप्येका । अखण्डैकवस्तुनो निर्बाधभेदकल्पनमपि व्यवहार ।

सम्यग्दर्शनादय पर्यायाः लक्षितपर्यायभेदश्च व्यवहारः। तेन गङ्गातत्त्व्यवहारेणैव ज्ञानिनो दर्शन ज्ञान चारित्रम्। भेदलक्ष पर्यायनिर्मलता न, लक्ष्यविषयस्य गविडनस्वरूपत्वात्। यत्र सिद्धपर्यायरूपशुद्धतत्त्वलक्ष्येऽपि स्वरनिर्जरे गदिते तत्र तत्पर्यायानुरूपानादिमिद्धज्ञायकभावलक्ष्यो गर्भित एवास्ते। तत्रापि ज्ञायकस्वभावानुभवस्यैव मङ्गल माहात्म्यम्।

दर्शनज्ञानादयोऽनन्तगुणा वस्तुरूपपर्यायैरेव भूत्वा कथञ्चित्कार्यापन्नया मिथो विवर्तन्ते। गतो हि ज्ञानगुणद्वारा सकलगुणाः स्वस्वकार्यवशाद् भिन्ना अप्येकरूपेणैव प्रतिभासते। यद्यपि ते भिन्नभिन्नस्वलक्षणास्तथापि ते समर्मेकमेव वस्तु। वस्तुनि द्रव्यगुणपर्यायभेदा न सन्ति अन्वयिसामान्यरूपद्रव्य सहभाविविशेषलक्षणगुणक्रमभाविविशेषलक्षणपर्यायैरेकस्य व्यवस्थितस्य वस्तुत्वात्, तथापि गुणगुणिभेद कृत्वोपदेशपद्धतिर्व्यवहार.। व्यवहारविषयभूताना दर्शनज्ञानचारित्रादीना पर्यायाणा स्वस्वलक्षणप्रसिद्धगुणाना लक्ष्य शुभरागसपादक। अखण्ड सामान्यचैतन्यभावदृष्टिस्तु रत्नत्रयविकासस्य कैवल्यस्य च कारणम् सामान्यनिर्मललक्ष्यत्र विशेषे नैर्मल्य स्य निरन्वनत्वात्। तत्रापि विकास पर्यायो व्यवहार। यस्य विकासरूपस्तद्द्रव्यमितिनिश्चय.।

अथ पद्व्याख्या क्रियते-

व्यवहारेण वस्तुगतकार्यविशेषनिरपेक्षगुणप्रतिपादनरूपानुपचरितसद्भूतव्यवहारनयेन कार्यविशेषमापन्नगुणप्रतिपादनरूपो

यतो ह्यात्मा स्लैरस्वभाव एव ।

जाणगो सुद्धो–तर्हि किमस्तीति प्रश्ने समुत्तरमेतत्–नायकं, शुद्धचैतन्यस्वभाव । यद्यप्ययमपि विकल्प' किन्तु पूर्णाखण्ड वस्तुप्रतिपादनदक्षशक्तिनाढनेन शब्देन स वाच्योऽभीप्सित प्रतिपादित ।

इदमत्र तात्पर्यम्–यथा ह्यग्निनिश्चयनयेनाग्निरभेदरूप एक एव ज्ञायते किन्तु व्यवहारेण स दाहक पाचक प्रकाशक, भिन्न भिन्नकार्यापेक्षया भेदरूपो ज्ञायते । तथाऽयमात्माऽप्यभेदनिश्चयिकनिश्चयनयेन शुद्धचैतन्यस्वभावोऽपि भेदरूपव्यवहारनयेन ज्ञानस्वरूपो दर्शनस्वरूपश्चारित्ररूपो वेति भिन्नभिन्नकार्यापेक्षया भिद्यते तस्य धर्माणां संयोजनमपि बुद्धौ वर्तते । किन्तु भेदलक्ष्यस्य रागमपादकत्वात् निर्मलनिर्विकल्पैकस्वरूपाभेदलक्ष्यस्य निर्मलता संपादकत्वात् निश्चयनयोपयोगे प्रयत्नो विधेय तर्हि शुद्धनिश्चयनयापरनामा परमार्थ एव वक्तव्य उपेदयनयस्य प्रतिपादने लक्ष्ये च रागादिविकल्पोपत्तेरिति चेत् –

जह णवि सक्कमणज्जो अणज्जभासं विणा उ गाहेउ ।

तह ववहारेण विणा परमत्थुवएसणमसक्कं ॥८॥

तथा म्लेच्छपल्ल्यां गतेन केनचिदार्येण म्लेच्छभूपालप्राप्त प्रणामेनार्यभाषया स्वस्तीत्यभिहितो म्लेच्छभूपालोऽपरिचितार्यभाषत्वेन तथाविधशब्दवाच्यमवधानवशोधारिकिंचिदपि नावबुध्य मानोऽनिमेषोन्मषितनयनो मेष इव केवल निरीक्षत एव । तथ

कीयज्ञानस्य पूर्णरूपत्वात्तज्ज्ञानस्य । तदनुरूप च परमब्रह्मणो वक्ताऽपि सचेष्टोभवति । श्रोतार किल निर्मल पूर्ण तत्त्वमवगन्तु निर्मलपूर्णशक्तिप्रयोगेन सोत्साह सावधान मुहुर्मुहुस्तत्तत्त्वमभि मन्यन्त एव स्वदयाशीलस्य तत्त्वावबोधपर्यन्त प्रमादरहितत्वेन प्रयत्नशीलत्वात् ।

परमार्थस्तावदखण्डोऽवक्तव्य स्वसवेद्यस्तमवगमयितु गुण-द्वारा पर्यायद्वारा च भेदीकृत्य व्यवहारस्य प्रयोजकत्वम् ।

आत्मा हि स्वद्रव्यक्षेत्रकालभावचतुष्टयात्मकस्तत्र द्रव्यत्व गुणपर्यायसमूहरूपपिण्डत्व गणनाविषयत्व । क्षेत्रत्वमसख्यात-प्रदेशरूपत्व । कालश्च पर्याय यो यस्मिन् समये वर्तते स तत्र तस्य काल । भावात्मकत्व च सर्वगुणमयत्व तेषु चाभेदनात्मजी वनत्वाखात्मकचैतन्यमयत्व । तत्र द्रव्यक्षेत्रकालदृष्ट्याऽऽत्म निरीक्षणे विकल्पकत्वेव ज्ञानज्ञेययोर्द्वैतत्वात् । चैतन्यभावेनावलोक-ने तु सत्याऽऽकारत्तणिकपर्यायाणामत्यन्तगौणत्वेन सर्वव्याप्येक-चिद्रूपस्य चैतयेन सचेतितत्वाच्च तच्चेत्ययोरद्वैतत्वेन तस्या शुद्धा त्मानुभूत्या निर्विकल्पकत्वरूपस्य परमार्थवस्त्वाविर्भाव समुप लभ्यते । तदनुभवस्य तथाभेदरूपेण प्रतिपादयितुमशक्यत्वा-द्गुणगुणिनोर्व्यपदेशतो भेदमुत्पाद्य व्यवहारनयेन ज्ञानिनो दर्शन ज्ञान चारित्रमित्यार्यै शिष्य प्रतिपाद्यते ।

सम्यग्दर्शन निश्चयनयविषयो नास्ति किन्तु यो निश्चयनय-विषय स एव सम्यग्दर्शनस्य विषय । एवमपि निश्चयनय

सम्यग्दर्शनस्य विषयो नास्ति निश्चयनयस्य सम्यग्दर्शनस्य च खण्डरूपत्वात् तयोर्विषयस्य चाखण्डरूपत्वात् ।

अत्र हि यथाऽऽर्यानार्यभाषावेदिनाऽनार्यभाषयाऽनार्यं प्रतिपाद्यते तथा निश्चयव्यवहारात्मकप्रमाणवेदिना भेदप्ररूपक- व्यवहारनयेन व्यवहारी जन प्रतिपाद्यते । तत्र निर्मलपर्यायवि- तर्केऽपि लक्ष्यमसन्त्यज्य सर्वगुणाद्यभेदरूपो ज्ञायकमात्र पूर्ण आत्मा लक्ष्यीकर्त्तव्य ।

गुणगुणिनोर्भेदमुत्पाद्य प्रतिपादनप्रक्रिया श्रुत्वा भव्यो भेद न पश्यति किं त्वखण्डस्यात्मनोऽभेदानुभवने प्रयत्नशीलो बोम बीति । सम्यग्दर्शनपर्यायमप्यनवलोक्य सम्यग्दर्शनविषय भूतपूर्णाखण्डध्रुवस्वभावमयमात्मानमनुभवति । सम्यग्दर्शन- स्य पर्यायरूपत्वेन सम्यग्दर्शनपर्यायलक्ष्येनापि तस्याखण्डस्य विकल्पासम्भवात् ।

अथ पदव्याख्या क्रियते–

जह–यथा येन प्रकारेण, (वक्ष्यमाणेन)

णवि–नापि-अपिशब्दो दृढतापूर्वकवर्णने समस्ति न निषेधे।

सक्क–शक्य सामर्थ्यविषय शक्त, योग्य शक्य ।

अणज्जो–अनार्य म्लेच्छ संस्कृतभाषानभिज्ञ । अत्रानार्यदृष्टान्तस्य आर्यभाषाप्रयुक्तशब्दार्थानभिज्ञताप्रयोजकत्वम् ।

अणज्जभासविणा–अनार्यभाषा विना अनार्यमातृभाषाप्रयोगेण विना ।

गाहेउ-ग्राहयितु अर्थं ग्राहयितु अर्थग्रहणरूपेण समाय यितुम् ।

तह-तथा तेन प्रकारेण लौकिकदृष्टान्तपद्धतिवत् ।

ववहारेण विणा-भेदोत्पादकव्यवहारनयेन विना ।

परमत्थुवएसण-परमार्थोपदेशन परमार्थस्योपदेशनम् ।

असक्क-अशक्य, शक्य न भवति ।

जह अणज्जो अणज्जभासविणा गाहेऊ ण सक्क-यथा अनार्यो म्लेच्छः म्लेच्छभाषाप्रतिपादनेन विना संस्कृत-भाषा प्रयुक्तशब्दार्थं वयमप्यवबोधयितु न शक्यः ।

तह ववहारेण विणा परमत्थुवएसणमसक्क-तथा गुणगुणि-भेदप्रतिपादनेन विनाऽव्यक्तस्यसनातनात्मस्वरूपापदेश अपि ग्राहयितु मशक्य एव ।

इदमत्र तात्पर्यम्-सूरय परमार्थतत्त्वानुभविनोऽनुभूततत्त्व यथाऽनुभवे समासीत् तथा प्रतिपादयेयुरत्र न कोऽप्युपाय अनुभूतोऽर्थ अनुभवगम्य एव तथापि मुमुक्षुशिष्याग्रहेण करु-णया च प्रमत्ता सन्तस्त विध्युपदर्शेन गुणगुणिभेदव्यपदेशेन प्रतिपादयन्ति । अत व्यवहार प्रयोजनस्तथापि विधिदृष्टि गुण गुणिभेददृष्टि विहायाभेदरूपपरमार्थ एव लक्षितव्य ।

ननु कि व्यवहारोऽसत्यो यतो व्यवहार अनाश्रयणीय स्यादिति चेन यथा द्रव्यस्य द्रव्यरूपत्वात्सत्यत्व तथा पर्याय-

द्रव्यपरिणतिरूपात्सत्यत्व । पर्यायस्यासत्यत्वे परिणमन-

स्यामङ्गात्वेन द्रव्यास्याप्यभाव स्यात् पर्यायशून्यास्यार्थस्य सम्भूतस्वरूपत्वात् तथापि यथा द्रव्यस्य द्रव्यत्व त्रैकालिकमवि नश्वरमेकस्प, न तथा तस्य परिणमन त्रैकालिकमनिनरन- रात् । तस्मात्पयायप्ररूपको व्यवहाराऽभूतार्थो निगद्यते ।

किंच क्षणिकपर्यायानुचये लक्ष्यस्य क्षणिकत्वात् ध्यान विषयमनातनताऽभावनैकाग्र्यस्याभाव अनैकाग्र्ये तु ध्यानमपि न सम्भवति निर्विकल्पकस्थितिर्दूरमास्ताम् । अखण्डाविरनर द्रव्यलक्ष्ये चोपादानकारणसदृश कार्यमिति न्यायेन निर्विकल्प ध्यानोपायन कारणसमयसारानुरूपकार्यसमयसारनिष्पत्तिरिति निश्चयनयो भूतार्थ इति दिक् । ततो व्यवहारनयोपायेन तत्त्वमव गम्य तत्त्वमेव लक्षितव्यमिति भावार्थ ।

ननु व्यवहारस्य कथ परमार्थप्रतिपादकत्त्व व्यवहारस्य भेद रूपत्वादिति चेद्दृष्टान्तपुर सरमुच्यते–

जो हि सुएण हि गच्छइ अप्पाणमिण तु केवल सुद्ध ।
त सुयकेवलिमिसिणो भणंति लोयप्पईवयरा ॥९॥
जो सुयणाण सव्व जाणइ सुयकेवलि तमाहु जिणा ।
णाण अप्पा सव्व जम्हा सुयकेवली तम्हा ॥१०॥

सकलागमपारगो युक्तिस्वानुभवसमुल्लब्धविशदात्मतत्त्वो यो भावश्रुतेन शुक्लध्यानरूपस्वसंवेदनज्ञानेन निर्विकल्पसमाधिनाऽऽग- मज्ञानोपयोगेन वा पारिणामिकभावानुभवगोत्या ज्ञ नस्य स्वात्मन्येव निपातत्वे केवलमसहाय शुद्धमद्वैत रागादिरहित निजात्मान

मभिगच्छति त सकलागमपारगत्वाल्लोकप्रकाशकत्वमापन्ना परम र्थेय परमार्थत श्रुतकेवलीत्यभिष्टुवन्ति । यश्च सर्वं श्रुतज्ञान जानाति स व्यवहारेण श्रुतकेवलीति गणधरदेवा ब्रुवंति । अत्र य एवान्तर्दृष्ट्या परमार्थश्रुतकेवली स एव तज्ज्ञानविषयत्वेन देशतो व्यवहारश्रुतकेवली । नात्र सकलागमावबोधविरहित कश्चित दितर सामान्यसम्यग्दृष्टिर्निश्चयश्रुतकेवलित्वेन निरूपित एकस्य व्यवहारस्य परमार्थप्रतिपादनस्य प्रस्तुतत्वात् । यथा हि घटज्ञानी घटज्ञानविषयावच्छिन्नत्वाच्छिन्नघटपदार्थं जानातीति भेदेऽभेदो- पचाराद्व्यवहारेण घटज्ञानी । तेन व्यवहारेण घटज्ञेयाकारनिष्ठ ज्ञानव्यक्त्या परमार्थत स्वात्मन्येव क्रियोत्पत्तेर्घटज्ञानस्य स्वात्म रूपत्वात् स्व तथात्मान जानातीति परमार्थस्य प्रतिपाद्यत्वाद्घट ज्ञानीति व्यवहार प्रयुज्यते । तथा सर्वश्रुतज्ञानी सर्वश्रुतविषया- वच्छिन्नत्वाच्छिन्न श्रुतविषयं जानातीति भेदेऽभेदोपचाराद्व्यवहारेण द्वादशांगश्रुतज्ञानी। तेन व्यवहारेण सर्वश्रुतज्ञेयाकारनिष्ठज्ञानव्यक्त्या परमार्थत स्वात्मन्येव क्रियोत्पत्तेः सर्वश्रुतज्ञानस्य स्वात्मरूपत्वा त्स्व तथात्मान केवल जानातीति परमार्थस्य प्रतिपाद्यत्वाच्छ्रुत केवलीति व्यवहार प्रयुज्यते ।

यतो हि सर्वश्रुत ज्ञानमात्मैव ज्ञानतादात्म्यस्या न्यथैवोपपत्ते- स्तथा सति च य सर्वं श्रुत द्वादशांगागमप्रकीर्णकमय जानातीति कथने तथा भूतात्मरूपमात्मानं जानातीत्यायाति स च परमार्थ एव । अत्र हि भावश्रुतज्ञानमयस्यात्मन परमार्थस्य परिच-

याय सर्वश्रु तनानगुणपर्यायभेदेन व्यपदिशतो व्यवहारनयस्य प्रयास । तथैव चानन्तगुणाभेदरूपस्यैकद्रव्यनिष्पीतानन्तपर्यायस्य चैतन्यमयस्यैकस्वभावस्य परिचायाय यो वस्तुयाथात्म्यावलोकनस्वभावरूपं दर्शनं यथार्थसंवेदनस्वभावं ज्ञानं याचा आवरणस्वरूपं चारित्रमतत्तीत्यात्मेति गुणगुणिनो भेदेन व्यपदिशतो व्यवहारनयस्य प्रयास ।

अथवा यो द्रव्यश्रुतधारेणोत्पन्नेन भावश्रुतरूपेण स्वसंवेदनज्ञानेन केवलं शुद्धमात्मानं जानाति स श्रुतकेवलीति परमार्थश्रुतकेवली।

यश्च स एव यदा स्वशुद्धात्मानं न भावयति बहिर्विषयं द्रव्यश्रुतार्थं जानाति स व्यवहारश्रुतकेवली । अत्र परमार्थश्रुतकेवलिनो व्यवहारतया द्रव्यश्रुतार्थज्ञत्वं, व्यवहारश्रुतकेवलिनश्च परमार्थतया तथाभूतज्ञानमयात्मज्ञानत्वं प्रमाणसम्मतमेव ।

अन्यच्च यथा य केवलज्ञानेन केवलं शुद्धमात्मानं जानातीति स केवलीति परमार्थो यश्च स एव क्षीणसकलज्ञानावरणत्वेन युगपत्समाक्रान्तनिखद्रव्यक्षेत्रकालभावतया सर्वं जानात्यसौ केवलीति व्यवहार । अत्राप्यय व्यवहारः परमार्थमेव प्रतिपादयति न किञ्चिदप्यतिरिक्तम् । कुत ? यतो हि निरञ्जनाकारनिष्ठासौ ज्ञप्तिरात्मा अनात्मा वा । न तावदनात्मा सर्वस्याप्यनात्मनो ज्ञप्तिक्रियायादात्म्याभावात् । ततो निरञ्जनाकारनिष्ठज्ञप्तिव्यवस्थितं ज्ञानमात्मैवेति हेतोर्य सर्वं जानातीत्यभिमापणे य

केवलमात्मानं जानाति स केवलीत्यागाति। एवं ज्ञाननानिनो भेदेन व्यपदिशता व्यवहारेण परमार्थ एव प्रतिपादितः। तथा दार्ष्टान्तिकीभूतात्मज्ञानोपायोऽपि निदिध्यासितव्याम्।

अथवा यो निश्चयतो भावश्रुतेनाखण्डमेकज्ञायकस्वभाव एव केवलं निजात्मानं स्वयंविदा जानातीत्यसौ परमार्थतः श्रुतकेवली यश्चागमद्वैतन्यमयमात्मानं जानाति तत्परिणमनविवर्जे ऽवतिष्ठते स व्यवहारेण श्रुतकेवली। स्वतन्त्रोऽहं ज्ञानमात्रमेवाह मिति भावना यद्यपि रागादिमिश्रितो वितर्कः मनोविकल्पस्तथापि तस्यात्मविषयतया प्रवर्तमानत्वेन परमार्थदर्शकत्वात् एव स व्यव हारेण श्रुतकेवली। इत्थमपूर्णश्रुतज्ञानेनापि सकलश्रुतविषयीभूत पूर्णात्मविषयीकरणात् पथक्त्ववितर्कशुक्लध्यानप्रायोग्या श्रुत-केवली। अथवा स परिपूर्णात्मदर्शी श्रुतकेवली भविष्यतीति द्रव्यनिक्षेपमाश्रित्य व्यवहारेण श्रुतकेवली। केवल्याश्रय श्रुतकेवलित्व-पूर्वत्वात् "शुक्ले चाद्ये पूर्वविद" इति वचनाच्च।

अथ पदव्याख्या क्रियते–

जो निजमर्कश्रुतावबोधपरिणत्या स्वचतुष्टये परिणम्य कर्तृ कर्मक्रियाऽव्यतिरिक्तवस्तुतया स्वस्य क्रियाविषयत्वमापन्नो य कर्ता।

हि–स्फुट, णिच्छयदो, निश्चयनयेन वा स्वकीयकर्तृकर्मक्रियैव यदष्टिपुर सराध्यात्मप्रज्ञप्ते।

सुएण– निर्विकारज्ञानस्वभावकारणोपादानप्रविशत्सर्वश्रुत-

ज्ञानेश्वरोरान्द्रिस्वसंवेदनज्ञानरूपभावश्रुतेन

अहिगच्छइ–अभिगच्छति अभि समन्तात् विकल्परहितत्वेन एकस्वरूपत्वाऽधिष्ठानतया वा सर्वप्रदेशं कृत्वापारेणानन्तशक्तितया सर्वगुणाभेदनयानुभवेन गच्छति जानात्यनुभवति ।

केवल–निजपत्ताक्रमसहाय स्वय स्वसर्वस्वतानच्छिन्नम् ।

सुद्ध–परसत्तया रहित त्रिकालेष्वनुगत चैतन्यसामान्यात्मान स्वय रागादिरहितम् शुद्धम् ।

इण–इम स्वसंवेदनप्रत्यक्षविषयीभूतम् ।

अप्पाण–दर्शनज्ञानचारित्राणि सततमतमान निजम् ।

त–अनिष्पद्कारकतया प्रवर्तमान पूर्वोक्त त पुरुषम् ।

लोयप्पदीवयरा –लोकप्रदीपका सम्यग्मतिश्रुतावधिमनःपर्ययज्ञानधारित्वेन श्रुतेन परोक्षतया लोकालोकमय सर्वं नन्त सर्वावधिवशेण बादरबादरबादरबादरसूक्ष्मसूक्ष्मबादरो सूक्ष्मसूक्ष्मसूक्ष्म त्वावच्छिन्नात् सर्वान्स्कधाणून् द्रव्यकर्मोदयगमक्षयोपशमनन्त जीवतत्त्व मन पर्ययपद्धिबलेन मनोविकल्पाश्च प्रकाशयन्तो गणधरदेवा ।

इसिणो–क्षपक विविधर्द्धिप्राप्ता निर्मला सर्वप्रमाणभूता सुयकेवलि–परमार्थश्रुतकेवलिनम् ।

भणति–स्वय तत्त्वमनुभूय प्रस्तावनाकाले याथातथ्य कथन्ति ।

जो– स ... गो जे५।५

कर्ता ।

. कर्ता ।

सव्वं सर्वमाचाराङ्गसूत्रकृतस्थानसमवायव्याख्याप्रज्ञप्तिज्ञातृ
पासकाध्ययनांत कृद्दशानुत्तरोपपादिकदशाप्रश्नव्याकरणविपाक-
ष्टिवादाङ्गमय सामायिकचतुर्विंशतिस्तवाद्य गवाह्यमय परिपूर्ण
णाण-श्रुतज्ञान द्रव्यश्रुतम् ।
ाणदि-इदमेवेद्दशमिति नि शक्ततया जानाति ।
अन्तर्बाह्यमय द्रव्यपर्यायमय पर्यायप्रधानतयनिरूप्य-
ण त पुरुषम् ।
णा-जिना सर्वज्ञदेवा गणधरदेवा वा ।
केवलि-सर्वद्रव्यश्रुतं व्यवहारश्रुतकेवलिनम् ।
हु- आहु मुवन्ति सुव्यक्त प्रकटीकुर्वन्ति ।
दा- श्रुतो हि स आत्मनो द्रव्यश्रुतकेवली निगद्यतेऽथवा
श्रुतश आत्मनो वेति प्रश्ने हेतुमाह यस्मात्कारणत् ।
णाण- अत्र प्रकरणे सर्वद्रव्यश्रुतविषयतया व्यज्यमान
मयं ज्ञानं आत्मसवित्तिविषय परपरिच्छित्तिविषय वा ।
- आत्मा एव स्वस्य गुणानां स्वस्मिन्नेवक्रियानिष्पत्तेः स्व
दभिन्नत्वाद ज्ञानस्यात्मव्यतिरिक्तयाऽनुपलब्धेरात्मनो
मयत्वाच्च ।
दा-तस्मात्कारणात्-सत सामान्यविशेषात्मकत्वात् ।
सुदकेवली-श्रुतज्ञानस्यात्मव्यतिरिक्तत्वाभावात् श्रुतज्ञान सर्व
तीत्यभिप्राये तथाभूतज्ञानमयमात्मान जानातीति निष्कर्षो

ववहारोऽभूयत्थो भूयत्थो देसिदो दु सुद्धणओ ।
भूयत्थमस्सिदो खलु सम्माइट्ठी हवइ जीवो ॥११॥

व्यवहारनयः किल प्रतिक्षणध्वंसोत्पादव्ययसाधितानुवपरिणामप्रतिपादकत्वेन पर्यायरूपास्तित्वनिर्वर्तितनिर्वर्तमानानेकद्रव्यपरभावाभिप्रायित्वेन वस्तुनो निरपेक्षाभेदैकरूपमपि त्रैकालिकाक्रमवर्तिगुणानां प्रयोजकत्वेन चाभूतार्थप्रतिपादकत्वादभूतार्थः । शुद्धनयस्तु सकलगुणाभेदैकपिण्डसामान्यविशेषात्मकवस्तुनिर्विशेषसमग्रे कस्मात्प्रकाशप्रयोजनज्ञातृपरमार्थनेतृत्वाद्भूतार्थो देशितः । तत्र यः स्वविषयमात्रप्रतिपादकव्यवहारनयाविरोधेन मध्यस्थः सन् शुद्धाखण्डैकप्रतिभासमयनिजभूतार्थमाश्रयति स खलाभेदरत्नत्रयलक्षणनिर्विकल्पसमाधिबलोपलब्धशुद्धात्मानुभवितृत्वान्निश्चयेन सम्यग्दृष्टिर्भवति ।

बाह्यार्थनिमित्तनिरपेक्षो निरुपाधिकपारिणामिकः स्वभाव स एव त्रिकालगोचरत्वात्सदान्तःप्रकाशमानत्वाच्च भूतार्थः । बाह्यार्थसद्भावासद्भावनिमित्तसापेक्षो भावो गुणविकारः स च वर्तमान- [illegible] मात्ररूप [illegible] । पुण्यपापादिभावा- [illegible] न भूतार्थमुपलभते । स ह्यात्मस्वभावो [illegible] साधनेन वाऽऽविर्भाव्यो धर्मस्य धर्मिण्येव [illegible] भिविकासायोगात् । धर्मिसामान्यावलम्ब [illegible] व्यक्तेः । स्वाधीनपूर्णाखण्डज्ञानानन्दमयनिजलक्षणो [illegible] सहजानन्दः स्वयंसिद्धव्यक्तिकः इति भावः ।

किञ्च—शुभप्रवृत्यादय एवमाभ्यां मनो न व्यवहारस्ते खलूप
चार एव । रागद्वेषादयश्चात्मस्वभावेऽप्रतिष्ठितत्वादसद्भूतव्यव-
हार । मतिश्रुताभ्योऽपूर्णाभ्यास्तु निमित्तमपेक्षत्वात्क्षणिकत्वा-
दनवज्ञानादयश्च कर्ममलज्ञाननिमित्तजा वा मदशतया निरंतरमपि प्रवि
चण प्रवर्तमानत्वादुपचरितसद्भूतव्यवहार । केवल यो निर्वि
कल्पज्ञानानन्दमयाखण्डपरमार्थस्वरूपात्मनो ध्रुवस्वभावभूतज्ञानादि-
गुणाभिधानतो भेदतया व्यपदिश्यमानोऽपीश्वरमनुपचरितसद्भूत-
व्यवहार निर्लेप एव परमार्थप्रतिपादननिमित्तरूपो व्यवहार ।
सोऽपि मनोविकल्परूपत्वात्परमार्थप्रतिपादनोपायत्वात्परमशुभराग
सम्यक्त्वानुभवपरिणतिनिखिलत्वात्व अभूतार्थ ।

आत्मसम्यक्त्वारम्भादनेक शुभप्रवृत्तय उद्भवन्ति तत्र सन्निहि-
तमाहात्म्योऽपि भव्यो निश्चिनोति—पुण्यपापाना तत्फलाना
तद्विपाकोपहारलब्धोपभोगाना च नाहं कर्ता क्रियाश्च ता
सर्वा न मे, कुगुर्वादिप्रतिपादितसिद्धान्ता न मे प्रयोजका
इति । तस्य मुमुक्षोर्देवशास्त्रगुरुषु बहुमानो योभवीति वीतराग
प्रणीतधर्मे महादर सञायते । स हि नवतत्त्व परिलक्ष्याभेददृशं
ल्पा निश्चित्यानवरागं विहाय निर्विकल्पतत्त्वपरिणतावुद्यमते ।
यद्यप्युक्तसर्वतरगव्यवहारो मुमुक्षो सञायते तथापि तेषां यदि
श्रद्धायामादर स्यात्तर्हि च गृह्णीयादेव चेदभूतार्थाश्रयणात्सम्य-
क्त्वानुभवो न भवति । सम्यक्त्वपूर्वागतव्यवहारलक्ष्य सन्मुख्या

यश्च स्व परं वा द्रव्य स्व परो वा गुण स्व परो वा पर्याय स न स्वोऽर्थस्तस्याध्रुवकालेन ध्रुवकालेन कालामद्भावेन वा निरूपितत्वाभावात्। तथा हि–अत्र ध्रुवकालेनोत्पादमयेन सहारम येन समवेत पर्याय । ध्रुवकालेन त्रैकालिकापरसमितेन समवेतो गुण । ध्रुवाध्रुवकालसमवेत शानमद्भावामद्भावसंकलित वा तत्त्व द्रव्यम् । यश्च कालमद्भावासद्भावनिरपेक्षोऽनुमनविषय सामान्य विशेषसद्भावामद्भावासंकलित स्व सर्व सोऽर्थोऽसौ च भूतार्थ । यो भूतार्थमाश्रयत्यनुसरति स सम्यग्दृष्टिरभिनन्द्यते । निरूपित भूतार्थव्यतिरिक्तान् शब्दादीन् व्यक्तिख्याति प्रभृतिमनोविकल्पान् गुणरूपान् सकलशक्तिमसमवायामद्रव्यतत्त्वानि च मलरूप निभृता रत्यरतिवृत्तयो न स्व । तदस्वनिकल्पदूरस्य स्वद्रव्य-गुणपर्यायस्यार्थ संवेदनपरिणत किञ्च पश्चादपि तदर्थसन्मुखोऽपि स निश्चयेन सम्यग्दृष्टिर्निर्णय इति दिक् ।

अथ पदव्याख्या क्रियते–

ववहारो–व्यवहार –विविधिपूर्वक अवहरण व्यवहार , विशेषाणां अवहरण व्यवहार भेदप्ररूपण पर्यायनिरूपणमनेक्य प्ररूपण साकारदर्शन सापेक्षविवरणमित्यर्थ ।

ऽभूयत्थो–अभूतार्थ –न स्वयं निरपेक्षतया निरुपाधितया भूत अर्थ अभूतार्थ । 'भू सत्तायां तथा सति न सन् अर्थ त्रैकालिसद्भुत्वानवच्छिन्न अथवा सन् निरपेक्ष निरुपाधिसिद्ध च एव न स अभूतार्थ । व्यवहार अभूतार्थ. अत्र

नमर्वया अभूतार्थ किन्तु निश्चयनयापेक्षयाऽभेददृष्ट्या भूतार्थ ।
भूय यो–भूतार्थ सत्यार्थ –
दमिदो हु–श्रीमदध्यात्मसाहिभि देशित कथित ।
सुद्धणओ–शुद्धनयो निश्चयनय । अत्र भावोऽयम् व्यवहारनय, अभूतार्थो निश्चयनयस्तु भूतार्थ । अथवा व्यवहारनयो द्वेधाभूतार्थ अभूतार्थश्च सद्भूतोऽसद्भूत इति यावत् । न केवल व्यवहारनयो द्विविध' किन्तु शुद्धनय निश्चयनय अपि भूतार्थ अभूतार्थ इति शुद्धद्रव्यनिरूपक शुद्धनिरूपविपर्यायप्ररूपक इति यावत् । तत्र क नयमाश्रित्य जीव सम्यग्दृष्टिर्भवतीति प्रश्ने समाधीयते –

भूयत्थमस्सिदो भूतार्थं आश्रित पूर्वव्याख्यानापेक्षया निश्चयनयमाश्रित उत्तरव्याख्यानापेक्षा–भूतार्थेऽपि भूतार्थं शुद्धद्रव्य निरूपक भूतार्थं आश्रित ।
खलु- निश्चयेन नान्य इति पुरुषणगर्मित विधिना । सम्मादिट्ठी हवइ लब्धसम्यगि प्रियर्वोत्तमनिराबाध सुखमूलदृष्टि प्राप्तवन्त सम्यग्दृष्टयो भवन्ति ।
जीवो–दशप्राणधारणात्मस्मशल्याव्च्छिन्नो जीवो यदि गम त्व विहायन्ति स्वभावमरमानोऽन्तरात्मपर्यायैरात्मनिर्मलति ।
एवमुक्तप्रकारेणाऽभूतार्थत्वात् परमार्थतोऽनुपादेयोऽपि व्यवहार सन्मार्गानभिपूणा सन्मार्गगामिनामपि केषाचिन्द्रयोऽन्न हवाशाना निष्प्रयोजन

परमार्थसिद्धयेऽधस्तन भूमिकाना व्यवहारोपदेशनमप यथोचित्य-
मार्य प्राह-

सुद्धो सुद्धादेसो णायव्वो परमभावदरिसीहिं ।
ववहारदेसिदा पुण जे दु अपरमेट्ठिदा भावे ॥१२॥

ये किल विविधस्थान तावभटपाकादिभिनवोडपपाकोत्तीर्ण-
सुवर्ण स्थानीयवायमा नतत्त्वश्रवण-स्पननिजचर्ममननभेदाभ्या
समेदाभेदपरिहाररूपभेदविचारसम्यक्त्व निर्विकल्पभावनानिर्वि
स्थितिविकारत्वया नतज्ञानादि ज्ञानदर्शितिचैतन्यरूपो सरोचारपोडप
स्थानोत्तीर्ण परमात्मपदार्थमवलोकितवन्तस्त पूर्वानकपाक सग्‍ठ
मानसुवर्णस्थानीयपूर्वानेकस्थानगापरममानुभवनस्वभावात् परम
शुद्धधु वतत्त्वादेशितया प्रकटीकृताचलपूर्णशक्तिनमदेकस्वभाव
शुद्धनय एव निर्विकल्पानुभवपूर्वभावित्परिज्ञातव्य । ये पुनर्वान
मपाकोत्तीर्णशुद्धसुवर्णस्थानीयपरमात्मपदार्थाऽनुभूतिशून्यत्वाद
विविधस्थानगतपाकपच्यमानसुवर्णस्थानीयेऽविरति देशविरति
मस्तविरतिक्रियाकलापभेदरत्नत्रयाद्य परमे भावेऽधिनास्तेष
गुणगुणिभेदविशिष्टशक्त्यवबोधन पर्यायादिविकल्परूपादेशो
निश्चयनयबोधपूर्वकत्वात्तु शक्यत्वादधस्तनावस्थायिक सुवर्ण
लाभवन् प्रयोजनवान् ।

ननु सामान्यविशेषात्मके निजात्मनि सति कर्थं सामान्यलक्ष
स्य शुद्धस्योपदेशो युक्त सत्य सामान्यविशेषात्मको निजपदार्थ
एवानुभाव्यो वर्तते स चैवानुभाव्यो भवति तिष्ठ

मानाराधनालक्षणसमाधिबलेन निष्पीतानन्तपर्याय सामान्यविशे-
षात्मकं निष्पन्नमेव स्वद्रव्यमनुभूतवता योगीन्द्राणां शुक्लध्याने
किमपि ज्ञातस्यावशिष्टमले पसम्मतो नो न पस किन्तु प्रमत्तानां
न सा योग्यतेति इतोनिर्विकल्पसहजैकज्ञायकस्वभावनिजपरमात्म-
पदार्थावबोधस्थैर्यं सन्मार्ग इति प्रेक्षावता यद्वक्तव्यं वर्तते तदशे-
षमुक्तमितिदिक् ।

अथ निश्चयव्यवहार निमित्तोपादानद्रव्यपर्यायापेक्षविनि-
वरण किञ्चित्क्रियते–

अत्र हि मुख्यतया द्रव्य निश्चयस्य विषय पर्यायश्च
व्यावहारिक । द्रव्यं त्रिकालस्थायि तच्च प्रतिक्षणं परिणमनशील
वर्तत एव यतस्तस्यानन्तानन्तक्षणेष्वनन्तानन्तपर्याया भवन्ति किन्तु
ते सर्वे परस्परव्यतिरिक्ता । न हि कश्चित्पर्यायो द्वितीयक्षण-
मास्थातुमर्हतीति इतोऽनन्तपर्यायसमूहो द्रव्यमथवा सर्वविशिष्ट-
पर्यायविरहितो ध्रुव एकरूपोऽथ द्रव्यमिति यत्किञ्चिदुक्त-
मुक्तम् । एतस्मान्निर्विकल्प स्वरूपाद्द्रव्यादाविर्भवन्ति विकल्पा
पर्याया यत्तदात्वे तदात्मवर्तते । अभीष्टशुद्धपर्यायोऽप्येतस्मादेव
सामान्यस्वभावादाविर्भविष्यति । यस्मादाविर्भविष्यति तस्य
लक्षणो लक्ष्यस्यैकञ्च सर्वविकारराहित्यसामान्यस्वभावत्वात्प्रयति-
तव्य वर्तने अपरिममाप्तेर्द्रव्यलक्ष्यरूपनिरूपस्यापि, भेदाभेद-
विकल्परहितनिजपरमार्थानुभवपर्यन्त च एष यत्न संवरो निर्जरा-
रूपश्च समस्ति ।

ननु यावन्त आत्मानो मुक्ता मुक्तिमार्गिणो भूता सन्ति किं एतादृशकठिनपरिमापणमाजनेपपयुज्यते नान्योस्त्यदन्यथा, श्रुति वाक्य वर्तते यच्छिन्नमुतियोगा तुपमापमिन्नानानेनैव मुक्त ...त्मानक सम्यग्दृष्टयश्च सञ्जाता इति चेदुच्यते शिवभूतियो गिनाऽन्योरन यं सम्यग्दर्शनममुपलब्ध तरैव सम्यक्त्वाभूमो निनारडपारिणामिकभावोन्मुखतयैव धलव्य । परिमाणचर्वणादयस्तु विकल्पज्ञानाना परिमार्जनार्थम्। सम्य-ग्ज्ञानुभव सर्वेनेन मर्वेषा विकल्पाना दूरीभवनेनैव सजायते । दर्शनावरणमोहतु नामावारणरागचैतन्यस्वभावलक्षण पारिणामिक भावस्य कारणत्वेनोपादान न केवल सम्यक्त्वपर्यायाविर्भावमपि प्रत्युत मरनमोक्षमार्गपर्यायेषु मद्भूतव्यवहारेणैतत्सगच्छत एतदैकल्पानिमारान् । कैवल्यापन्नव्यापि म पारिणामिकभावो वर्तते किन्तु सर्गमयसारप्रथमलक्षणानन्तर कारणव्यपदेश नाप्नोति पुनरपि सूक्ष्मदृशा दृश्यताम् शुद्धावस्थायामपि शुद्ध पारिणामिकभाव रूप द्रव्यमुपादानकारणं समस्ति यतश्च निरन्तर प्रतिक्षण चाविर्भूत कवलज्ञानपर्याया शुद्धसद्भूतव्य-वहारा निनरई रुपन्धिता ।

पर्यायाणा निश्चयकारण द्रव्यम् बधमोक्षरूपाणामशुद्ध शुद्ध-पर्यायाणां द्रव्यत एवाविर्भूतत्वात् तत्र पूर्वपर्याया निमित्तरूपा-स्तथापि बधपर्याया द्रव्याज्ञानस्य द्रव्यलक्षणास्यगोस्य साधनतमत्वेन मोक्षपर्यायश्च द्रव्यज्ञानस्य द्रव्य मलक्ष्य च तत्र निजोपयोगा

एतद्विवरणेन ग्र प्रयोजिनी ? यत्र पर्याया आविर्भूता आविर्भवन्ति आविर्भविष्यन्ति तस्य नित्यस्थापित एकलक्षणस्य द्रव्यस्य दृष्टा पर्यायपुनरोक्त निर्विकल्प प्रकटीभवति। येषा महा-योगिनामन्यार्थस्य पर्यायस्य गुणस्य वा ज्ञान वर्तते तेषामपि निर्विकल्पद्रव्यस्यानुभव आश्रयो वाऽस्त्येव बाह्यद्रव्यभाव दन्यथा रागद्वेषाश्रयत्वात्प्रमत्तत्व स्वच्युतिरच स्यात्। अतो मो हितैषिन्। यावद्बुद्धिपूर्विका ज्ञप्ति प्रवर्तते तावत्सर्वारम्भेण त्रैकालिकद्रव्यैकस्वरूपसामान्यस्वभावमगाभेदद्रव्यस्वरूप सलक्ष ताम्। उपादानकारणसदृशं कार्य भवतीति हेतोरात्मावमरयुपादा-नकारण द्रव्यातयानिर्विकल्पमभेदरूप वर्तते तथैव कार्यमपि पर्या-यतया निर्विकल्पमभेदस्वरूप भविष्यत्येव।

रागादि विकल्पोपाधिरहितपरमसमाधिबलेनात्मन्येवाराध्या राधकभावलक्षणाद्वैतभावनमस्कारप्रभावादगमात्माऽनाकुलत्वलक्षण सहजानद वेदयते।

आत्मन सर्वप्रकारेणोपादेयो रागादिभिन्नोऽग स्वात्मानि-भूत सहजानदस्वभाव। एतस्योपलब्धेव "रागादिसर्वविभाव-रहितचैतन्यस्वभावमात्रमेवाहम्" इतिभावभासनाया भावनाया अनन्तर भवति। अत्र प्रकृत तत्त्वमिदम् यद्यपि स्वानुभूतिदशा-ऽत्यन्तनिष्पन्ना निर्विकल्पा ऽस्ति तथापि तद्भावनात्प्राग्निश्चय-पक्ष आयाते। निश्चयनयविषयावबोधमार्गश्च व्यवहारस्तत प्राग्भवत्येवेति निमित्तव्यवहारो मग्गगवद्दुद्ग तयोरविरोधेन

मध्यात्य मन्निजपरमतत्त्वार्थे स्वमुखेनैवयथार्थनिश्चयानन्तरा गयत्नोऽपि निजानुभवान्निर्विकल्पतया सकलशक्तिपरिपूर्णा र्थानुभवः स्यात् ।

यो हि परा कर्मणो विकार आगच्छति कर्मणश्च दूरीकरणा द्विकारो निवर्तते' इति पश्यति स यद्यप्येवं निमित्तनैमित्तिकभावो वर्तते तथाप्येतच्चिन्तनेन दृष्टौ लक्ष्यभूतः परः एवेतिहतो पर लक्ष्ये कर्मदूरीकरणमसमाव्यम् ।

किञ्च परपदार्थस्य सद्भावाविरुद्धिना नास्य परिणत्या परपरिणमनं तस्यैव परस्य द्रव्यक्षेत्रकालभावपरिणत्या भवति तत्र कर्मदूरीकरणाभिप्राये परस्यैव लक्ष्या वर्तते तर्हि कर्म निर्वर्त्स्यते ? न, तस्य लक्ष्ये बन्धपरिपतत्वात् ।

अतो मुमुक्षो कर्तव्यमेतदत्र युक्तं यदविकारिनिरपेक्षज्ञान स्वभावं परिचित्य वर्तमानावस्थागतविकारमध्रुवं स्वभावविपरीत महितं ज्ञात्वा पर्यायं गौणीकृत्य स्वभावमाश्रयेत्सोऽविकारिस्व भावलक्ष्यबलेन विकृतभावानां तन्निमित्तकर्मणां तेषां नोकर्मणां बाह्यपदार्थानामुपेक्षितस्वतंत्रताश्रया दूरीभवनात्स्वयं स्व ज्ञानानंद-स्वभावं निजपरिणतावनुभविष्यति ।

अहो समस्तपरभावभिन्न सकलशक्तिपरिपूर्ण निर्विकारनिज-ज्ञानस्वभावाज्ञानेन प्राणिना इष्टानिष्टबुद्धि परमात्मद्रव्या सरसयोगे विकारेऽपूर्णार्थपर्याये वा रचिताऽनुपमनिजानन्दस्वभावा ज्ञानदशायामविकाराखंडैकरूपतत्त्वालोचितत्वेन परलक्ष्यस्वार्थर्या

भावित्वात् । स हि परो येन रूपेण लक्षित यत्राग च प्राणी युनक्ति स विकृत स्वद्रव्योऽप्युनोऽनित्यविपरीतपर्यायस्य द्रव्ये तदात्वे सद्रव्येन सयुक्तोऽस्ति तत्र यादृश कारणो करोति तादृश कार्यमिति न्यायात्म प्राणी विकारी चारुलितश्च बोभवि ष्यत्येव । अत शास्त्री सुक्ष्मै वस्तुस्थितिरवश्यमेवावगन्तव्या।

पर्याया स्वद्रव्यादाविर्भवन्ति न निमित्तात्किन्तु परलक्ष्य पर्याया परनिमित्तमाश्रीकृत्यैव स्वप्रभावेन भवन्ति । अत्रोपादान कारण विशिष्ट मः चित्, आश्रयकारणानि च पराणि । अत्राग विशेषोऽवगन्तव्यो यदि द्रव्याश्रितत्वविशिष्टेनोपादानेन स्वीकृत परैर्नात्र काऽपि चेष्टा कृता किन्तु परलक्ष्यी करणमेवापराध । विपत्तावत्र निमित्ताद्रागो जायते च दुखमागतो निमित्त नि सारयेत यतो रागादयो विलयमुपयेयु इत्येतयोर्द्वयोराशययो परलक्ष्य कृत एव कृतो वीतरागतावसर स्यात् ।

यदि पराश्रयत्वमनात्मस्वभावभूतरागादीन पराश्रयत्वनिरोधमभिधाय एते पर्याया मत्त उदिता इतिमूलभूतज्ञानस्वभाव मवलम्बते तदा पराश्रयत्वाभावेनात्मनाचनैतायुद्धशुद्धमवस्था वर्तमाने क्व वस्वभावाश्रयणाद्वीतरागतावसरो भवति ।

इत्येवमुक्तप्रकारेण व्यवहारनिश्चययोर्वा तीर्थतीर्थफलयोर्व्यवस्थितत्वेन यथावद् व्यवहारेण दर्शितव्यो निश्चयेनादेशितव्य ।

एव निश्चयव्यवहारविरोधध्वसि प्रमाणमवलम्ब्य नि शङ्कि-

वस्तु तत्त्वो सम्यगुपेत्य निर्मोह सन्निजपरमात्मपदार्थं रमते स झगिति ज्ञानानन्दस्वभावमय समयसारमवाप्नोति।

अथ पदव्याख्या क्रियते–

सुद्धो–शुद्ध शुद्धनय, निश्चयनय शुद्धनिश्चयनय', परमशुद्धनिश्चयनय नैश्चलिकध्रु वैकस्वरूपप्रधानस्वभावमयस्य वस्तुनो निर्णीकरणात्।

सुद्धादेसो– शुद्धद्रव्यस्य पररहितस्य विभावरहितस्य भेदविकल्पपर्यायनिरपेक्षस्य कथन यत्र भवति स सुद्धादेश। एतद्विषयकावलोकिनता शुद्धादेशमात्रेणैव प्रयोजनम्। दर्शनाया, भावपदव्यामुपेक्षणात्।

णायव्वो–ज्ञातव्य निर्विकारसहजानन्दज्ञानस्वभावमय स्व संलक्ष्यासावेव निर्विकल्पतयाऽनुभूतव्य।

परमभावदरिसीहि निरवर्तैकनिजात्मद्रव्यध्रुवसहजपारिणामिकभावस्वरूप- तन्यस्वरूपमवलोकितवाद्भि तेषामेवादेशो नि शयतया प्रवर्तमानत्वात्।

ववहारदेसिदा– व्यवहारेण– विकल्पेन– भेदन– पर्यायेण कदाचिदुपचारेणापि क्वचिद्देशितव्या शुद्धादेशग्रहणासमर्थत्वात्।

पुण–पुन अद्वीतव्यास्तु शुद्धनयाविषय. तदशक्तिश्चेत् इतिभावे। जेदु–तु ये। सुगम न्याय प्रयोजनमुद्दिश्य वर्तव्यं समुच्य सखेद तु शब्देन सबोध्यन्ते 'परन्तु ये जना.'।

अपरमे भावेट्ठिदा हितमभिलषन्तापि मदमिथ्यात्वे व्यवहार-

सम्यक्त्वे अविरतसम्यक्त्वेशुभोपयोगे भेदास्तत्र रूपे भावे परिणामे स्थिता ।

इदमत्र तात्पर्यम्– यद्यप्यज्ञानदशाया कथमपि हिताभिलिप्साया सत्य समुद्धरणाय निहितवदाना नदमग्नस्येव व्यवहारनयो हस्तावलम्बो वर्तते तथापि परविरहितमद्वनचिच्चमत्कारमात्र निजस्वरूपमात्मवलोकयता व्यवहारो न प्रयोजनवानिति व्यवहारेण जीवाजीवपुण्यपापाश्रवबन्धसवरनिर्जरामोक्षलक्षणनवतत्त्वानि मिथ्यात्वयोलिना परमशुद्धनिश्चयनयेनैकत्वमुपानीय द्रव्यत एवं चेरतो व्याताराकालतो नियत मात्रत पूर्णविमानवर्ण विमल स्वमवलोकयन् सर्वविकल्पग्रहमुक्त मभिनपरमात्मपदार्थमनुभवेत् । मगललोकोत्तमशरणभूतानुपमसहजानन्दसिद्धेरप उपाय ।

इति अध्यात्मयोगिन्यायतीर्थपूज्यश्रीमनोहरवर्णि–
श्रीमत्सहजानन्दविरचिते
समयसारभाष्ये पीठिकाधिकार समाप्तः ।

सहजानन्द शास्त्रमाला के प्रवर्तकों की शुभ नामावली निम्न प्रकार है

| | | |
|---|---|---|
| श्रीमान् | ला० महावीर प्रसादजी जैन बैंकर्स सदर मेरठ | २००१) |
| " | " मित्रसैन जी नाहरसिंह जी जैन मुजफ्फरनगर | १००१) |
| " | " प्रेमचन्द जी ओमप्रकाश जी निशात वर्क्स मेरठ | १००१) |
| " | " सलेखचन्द जी लालचन्द जी मुजफ्फरनगर | ११०१) |
| " | " कृष्णचन्द जी जैन रईस देहरादून | ११०१) |
| " | " दीपचन्द जी जैन रईस देहरादून | १००१) |
| " | " वारूमल जी जैन मसूरी | ११०१) |
| " | " बाबूराम जी मुरारीलाल जी जैन ज्वालापुर | १००१) |
| " | " केवलराम जी उग्रसैन जी जगाधरी | १००१) |
| " | " गैंदामल जी दगड़ूसाह जी जैन सनावद | १००१) |
| " | " मुकुन्दलाल जी गुलशनराय जैन नई मंडी मु० | १००१) |
| " | " कैलाशचन्द जी जैन देहरादून | १००१) |
| " | " शीतल प्रसाद जी जैन मेरठ सदर | १००१) |
| * " | " सुखवीरसिंह जी हेमचन्द जी सर्राफ बड़ौत | १००१) |
| * " | " बाबूराम जी अकलङ्कप्रसाद जी जैन रईस तिस्सा | १००१) |
| * " | " जयकुमार वीरसैन जी सराफ मेरठ | १००१) |
| * " | " फूलचन्द बैजनाथ जी मुजफ्फरनगर | १०००) |
| * " | " सेठ मोहनलालजी ताराचन्दजी बड़जात्या जयपुर | १००१) |
| * " | " सेठ भंवरीलाल जी जैन कोडरमा | १०००) |
| * " | " बा० दयाराम जी जैन S D O मेरठ सदर | १०००) |
| * " | " मुन्नालाल यादवराय जी मेरठ सदर | १०००) |
| × " | " जिनेश्वरदास जी श्रीपाल जी जैन शिमला | १००१) |
| × " | " बनवारीलाल जी निरञ्जनलाल जी शिमला | १००१) |

नोट—जिनके कुछ रुपये आगये हैं उनके पहले *यह निशान अंकित है।
×इनके रुपये इन्हीं के पास हैं। और सबके रु० आ गये हैं।